इतिप्रतिष्ठामयूख प्रारम्भः ॥

श्रीगणेशाय नमः महो महत्समाराध्य जलोत्सर्गमथोक्तवान् प्रतिष्ठां सर्वदेवानां नीलकंठो वदत्यसौ १ तत्र तत्कालविष्णुधर्मोत्तरे
चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवे तथा माघे वा सर्वदेवानां प्रतिष्ठा शुभदा सिते रिक्तान्यतिथिषु स्यात्सा वारे भौमान्यके तथे
ति तत्रैव आषाढे द्वे तथा मूलमुत्तरात्रयमेव च ज्येष्ठाश्रवणरोहिण्यः पूर्वाभाद्रपदास्तथा हस्ताश्विनी रेवती च पुष्यो मृ
गशिरस्तथा अनूराधा तथा स्वाती प्रतिष्ठासु प्रशस्यत इति अत्राषाढे द्वे इत्यनेनैवोत्तराषाढाप्राप्तावुत्तरात्रयपदमुत्तरा
फाल्गुन्युत्तराभाद्रपदयोरर्थवत् नारसिंहे तथा महाश्विनो मासस्तु नमः सर्वकामदः देवीतत्र सदा शुक्लकृष्णयोस्तनापि प्रतिष्ठिता
भवते फलदा पुंसां कर्कस्थे च रवौ स्थिते न तिथिर्न च नक्षत्रं नोपवासो न कारणम् मातृभैरववाराहनारसिंहत्रिविक्रमाः म
हिषासुरहंत्र्यश्च स्थाप्या वै दक्षिणायने क्वचिन्निषेधः आर्द्रादिके स्वातिविरामकाले नक्षत्रवृंदे दशके स्थिते र्के विवाहचौल
व्रतबंधदीक्षासुरप्रतिष्ठादिनकार्यमेवेति अथ संभाराः अर्कादिग्रहसमिधां प्रत्येकमष्टशतं संक्षेपपक्षे आज्यचर्वादिलोक
पालादियागाय पलाशादिसमिधां प्रत्येकमष्टसहस्रमष्टशतं वा पुष्पमालाः कुंकुमं कर्पूरः कस्तूरी चंदनं गुग्गुलुः धूपद
हनपात्रं आरार्तिकं घंटाः पादुका दर्पणं वस्त्रसामग्री पायसभक्ष्यभोज्यनैवेद्यं होमार्थमाज्यतिलयवाक्षतफलादिकं ॥
प्रतिकुंडं विष्टराश्चत्वारः प्रतिकुंडं स्रुक्स्रुवौ आसनानि त्रिसूत्री स्वेतोर्णासूत्रं सर्वतोभद्रादि रत्न० नाग्रश्वेतारक्तपीतनी
लकृष्णा वर्णिकाः स्नपनकलशाः पल्लवाः कदलीस्तंभाः पताका दश ध्वजाश्च दश तेषां वेणुदंडाः वज्रमौक्तिकवैडूर्यशंख

3768

स्फटिकपुष्परागेंद्रनीलमहानीलाइतिरत्नाष्टकम् हरितालकमनःशिलाभ्रककृष्णांजनमाक्षिककासीसस्वर्णमाक्षिकैगैरि
काइतिधात्वष्टकं तिलयवमुद्गगोधूमनीवारश्यामाकसर्षपव्रीह्यइतिवीजाष्टकं स्ववर्णरजतताम्रलोहत्रपुसीसरंगरीत्या
ख्यधात्वष्टकं मधुपर्कपात्रं सौवर्णताम्रंवा अर्धपात्रं शक्त्योकद्वित्रिमाषस्ववर्णशलाकास्थापनोपकलशरत्नानि षोड
शद्वारकलशाः अष्टौलोकपालकलशाः वेदिकलशाश्चत्वारः वास्तुमंडलकलशः कुंडकलशाः कुंडसंख्यपा निद्राकलश
स्नपनकलशाः पंचचत्वारिंशत् ४५ कलशसंख्यपाशरावाणि धारासहस्राविनौकलशौ गजाश्वस्थापनवल्मीकसंगम
कूलह्रदपवराहीन्त्वानस्जंद्वारमृदः मुराम्मांसीवचाकुष्टशैलेयहरिद्रादारुहरिद्राशठीचंपकमुस्ताइतिसर्वौषध्यः पंचगव्य
पृथकपृथक् व्रीहियवतिलगोधूमनीवारश्यामाकमुद्गाइतिसप्तधान्यानिशय्यासोपस्करा श्वेतवस्त्रं चामरे विचित्रविता
नं नयोदुकूलपट्टाः ऋत्विग्वरणसामग्री शिल्पिवस्त्रयुग्मित्यादिसंभृतसंभारोमूर्तिप्रतिष्ठादिनात्प्राक् सप्तमदिने पंचमदिने वा
दिनेसद्योवाप्रासादाग्रेमंडपंकृत्वातन्मध्येचतुरस्रां पंचहस्तां चतुर्हस्तां वा हस्तोच्छ्रितां वेदीं मंडपी नरेचतुर्द्वारं स्नपनमंडपं तत्र
वेदिकां च पं कृत्वा शिल्पिस्थानात्प्रासादद्वारादक्षिणं पीठं देवं तत्रानीपासनेनिधापर्वीत. प्राणानायम्य मासात्क्लिरवाम्मां मूर्तौ लि
गे वा देवकलासान्निध्यार्थंमायुः श्रीसर्वफलाक्षय्यसुखकामइश्वरप्रीतीकामोवा अमुकमूर्तेलिंगस्यवाप्रतिष्ठांकरिष्यइतिसंक
ल्प्यगणपतिपूजनं पुण्याहवाचनं कृत्वा प्रतिष्ठायाः अंगभूतंश्राद्धमेनत्स्कुर्लभं. यजमानात्मनः शक्यंकरिष्येमातृपूजनमिति

मन्त्रमुक्त्वामात पूजनं नादौ श्राद्धं च कृत्वाचार्यं वृत्वा त्रिंशान् षोडशाष्टौ चतुरो वा ऋत्विजो ष्टौ चतुरो वा द्वारपालान्वृत्वा तान्संपूजये
न्मधुपर्कादिना सदस्यवरणमप्यत्रेति त्रिविक्रमभाष्यः ततो मंत्रमूर्तिर्भवान्नाथ संसारोच्छेदकारक देवः पूजार्हो यथास्या
त्कुरु धर्मोन्नतिं च नः संसारभयभीते न अपयत्तः स भक्तितः प्रार्थ्यस्त्वत्प्रसादेन निर्विघ्नमेभवत्विति आचार्यं प्रार्थ्य सत्पूर्णघोषं
सपरिकाः संपूर्णकुंभौ भद्रं कर्णेभिरिति मंत्रेण महामंडपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविशेत् तत्राचार्यः अपक्रामंतु
भूतानि पिशाचाः सर्वतो दिशं सर्वेषामविरोधेन ब्रह्मकर्मसमारभ इत्युक्त्वा तन्न सर्षपान्विकीर्य देवा आयांतु यातुधाना अपया॰
तु विष्णोदेवयजनं रक्षस्वेति रक्षां कृत्वा वेदिकाग्नेयकोणे स्थूणावस्कदायै नमः वस्कदामावाहयामि इत्यालभ्य स्रक्गंधपु॰
ष्पादिनार्चयेत् ततः प्रादक्षिण्येन भद्रायै नमः भद्रा आवाहयामि इति द्वितीयां अदित्यै नमः अदिती आवाहया॰
मि इति तृतीयां नंदायै नमः नंदां आवाहयामि इति चतुर्थी मंडपाग्नेयकोणे भूत्यै नमः भूतिं आवाहयामि इति प्रथमां
१ सरस्वत्यै नमः सरस्वती आवाहयामि २ पूर्वसंध्यायै नमः पूर्वसंध्या आवाहयामि ३ मध्यसंध्यायै नमः मध्यासंध्या आ
वाहयामि ४ पश्चिमसंध्यायै नमः पश्चिमसंध्या आवाहयामी ५ गायत्र्यै नमः गायत्री आवाहयामि ६ सावित्र्यै नमः सा
वित्री आवाहयामि ७ बृहस्पतये नमः बृहस्पतिं आवाहयामि ८ अदित्यै नमः अदितीं आवाहयामि ९ विनतां आवाह
यामि १० पौर्णमास्यै नमः पौर्णमासीं आवाहयामि ११ सिनीवाल्यै नमः सिनीवाली आवाहयामि १२ इति षोडश स्थूणाः ॥

स्पृष्ट्वापूजयेत् मागमात्रेनमइतिबलिःकार्यः सर्वेभ्योनमइतिशास्त्रोक्तंधन्यानिपूजयेत् ततःपश्चिमद्वारेणनिर्गत्यपूर्वे
दिगादिद्वारतोरणपूजामारभेत तत्रप्राच्यास्तृतीयतोरणायनमः अश्वत्थतोरणेनंपञ्जरस्यसर्वविघ्नान्निवारयेतिपूजये
त् अथपत्रिमूलशृंगेषुप्रादक्षिण्येनेंद्रंधातारभगमित्रादित्यन्यासंकुर्यात् द्वारशाखयोर्ध्रुवमध्वरंचेतिपक्षद्वयमर्चयेत् ॥
शाखामूलयोर्धान्यराश्योरुपरिरत्नगर्भौप्रशांतशिशिरनामानौकलशौप्रतिष्ठाप्यपूजयेत् ततोद्वारदेशेइंद्रमावाह्यनमस्कृत्य
इंद्रायाहिचित्रभानोइतिपीतापताकांध्वजचालभ्यत्रातारमिंद्रमितितोरणोपरिनिदध्यात् इंद्रायघृतौदनबलिदानं अग्निमी
ळइत्यृग्वेदपूजयेत् ऋग्वेदः पद्मपत्राक्षोगायत्रः सोमदेवतः अत्रिगोत्रस्तुविप्रेंद्रऋत्विक्त्वेमेमखेभवतिध्यानम् तत्र
श्रीसूक्तंपावमानंचसोमसूक्तंसुमंगलं पौरुषंरुद्रसूक्तंचवामदेव्यंतथैवचेतिद्वारपालजपः अथाग्नेयकोणे अग्नयेनमइत्यग्नि
मावाह्यपूजयेत् अग्नआयाहीतिरक्तध्वजपताकालंभः त्वन्नोअग्नइतिपताकोच्छ्रयः अग्निंदूतमितिघृतौदनबलिः याम्येस्तु
भद्रद्वारतोरणायनमः औदुंबरतोरणेनंयज्ञंरक्षंसर्वविघ्नान्निवारयेतिपूजयेत् शृंगेषुपूष्णेनमः मित्रायनमः वरुणायन
मइत्यादित्यन्यासः द्वारशाखयोः सोमायनमः आयायनम इतिपक्षद्वयमर्चयेत् शाखामूलयोः पर्जन्याशोकनामानौकुं
भौप्रतिष्ठाप्यपूजयेत् ततोद्वारदेशेयममावाह्यनमस्कृत्ययमायसोममितिसामध्वजपताकालंभः यमायमधुमत्तममितितो
रणोपरिनिधानं माषभक्तबलिदानइषेत्वेतियजुर्वेदंपूजयेत् कातराक्षोयजुर्वेदस्त्रैष्टुभोविष्णुदेवताः काश्यपेयस्तुविप्रेंद्र

प्रति ऋत्विकत्वंमेमखेभवेतियजुर्वेदध्यानम् तत्र आनोभद्रानुवाकश्च आयुः शिशानकस्तथा षट्चैवात्रीणि च पठेत् ततोदैव्यपुनंतुमां
३ अभिधाअसिसत्तैवदीर्घायुस्त्वेकपंचपठेत् आप्यायस्ववषट् नमोअस्तुसर्पेभ्यः आकृष्णेनः नमः शंभवेदत्येकाएकाग्निर्देव
तोऋमात् त्रातारमिंद्रमित्येकासोमंराजानमेकया अन्नपतेमहाद्रुद्रः ऋचंवाचंसमग्रकपठेत् अथनिर्ऋतौ निऋतयेन
मइतितिर्ऋतिमावाह्यपूजयेत् मोषुणः परापरेतिपताकालंभः असुन्वंतमितिध्वजपताकोच्छ्रयणम् निर्ऋतिसंपूज्य ॥
मोषुणइतिकृष्णव्रीह्यन्नंघृतसहितंबलिंदद्यात् अथपश्चिमायां सुभीमतोरणायनमः प्लक्षतोरणेनपत्तेरक्षसर्वविघ्ना
न्निवारयेतिपूजयेत् अथत्रिशूलेषु अर्यम्णेनमः अंशवेनमः विवस्वतेनमइत्यादित्यन्यासः द्वारशाखयोः अनिलायनमः
अनलायनमइतिचसद्वयम् शाखामूलयोर्धान्यपुंजोपरिसंजीवनामृतनामानौकुंभौप्रतिष्ठाप्यपूजयेत् तत्रवरुणमावाह्य
नमस्तेअस्तुतत्वायामीतिश्वेतध्वजपताकालंभः उदुत्तमंवरुणेतितोरणोपरिनिधानम् नवनीतौदनबलिदानम् अग्नआ
याहीतिसामवेदंपूजयेत् सामवेदस्यफिप्पाक्षोजागतः शक्रदैवतः भारद्वाजस्यविप्रेंद्रऋत्विकत्वंमेमखेभवेतिसामवेदध्या
नं तत्रजयः इड्डापसेमगायतः अहमस्मिप्रथमजाः सेतूंस्तर स्वादिष्ठया गायंतित्वागायत्रिणः कस्यनूनंकतमस्यामृ
तानामित्यादि अथवायव्ये वायवेनमइतिवायुमावाह्यपूजयेत् वायोयेतेतिधूम्रध्वजपताकालंभः तववायवृतस्पतइ
तिपताकोच्छ्रयणम् वायुंसंपूज्यपयौदनबलिदानम् अथोत्तरे सुप्रभायतोरणायनमः शन्नोदेवीतितोरणालंभः ॥

न्यग्रोधतोरणेनपत्रं रक्षस्सर्वविघ्नान्निवारयेति पूजयेत् शृंगेषु त्वष्ट्रे नमः सवित्रे नमः विष्णवे नमः इत्यादितुन्यासः द्वार
शाखयोः मत्पूषाय नमः प्रभासाय नमः इति वस्त्रद्वयम् शाखामूलयोर्धनदश्रीपद्मनामानौ कुंभौ प्रतिष्ठाप्य पूजयेत् अत्रसो
ममीवास्य नमस्त्वस्तु सोमो धेनुमिति कृष्णवर्णध्वजपताकालंभः वयसोम इति तोरणोपरि निधानम् प्रैयंगवबलिदानं ॥
शन्नो देवीरित्यथर्ववेदं पूजयेत् कृष्णवर्णनपनोथर्वानुष्टुप्छंदः पुरंदरः वेदो वैतानगोत्रस्तत्र त्विकत्वमेमरवेभवेति तत्र
ध्यानम् अथर्वांगिरसं चैव अथर्वशिरसं तथा शांत्यध्यायं च पठेत् अथैशान्ये ईशानाय नमः इति ईशानमावाह्य पूजयेत् न
नमः शंभवे इति रक्तध्वजपताकालंभः तमीशानमिति उच्छ्रयः गौवेधुकबलिः ईशानपूर्वयोर्मध्ये अनंताय नमः इत्यनंतमा
वाह्य पूजयेत् नमोस्तु सर्पेभ्य इति मेघवर्णध्वजपताकालंभः तद्विष्णोरित्युच्छ्रयः विष्णोर्नुकमिति बलिदानम्
पश्चिमनिर्ऋतिमध्ये ब्रह्मणे नमः इत्यावाह्य पूजयेत् यद्देवा देवहेडनमिति रक्तध्वजपताकालंभः ब्रह्मजज्ञानमिति उच्छ्रयः
स नो भुवनस्य पतिः इति पायसबलिदानम् प्राच्यां गणानां त्वेति गणेशं संपूज्य नमोस्तु रुद्रेभ्यो ये अंतरिक्ष इति मंडपाद्
बहिर्दिग्विदिक्षु रुद्रान्संस्थाप्य तेभ्यो बलिं दत्वा ये के चित्विह लोकेषु आगता बलिकांक्षिणः तेभ्यो बलिं प्रयच्छामि नमस्तु
ते पुनः पुनरितीशान्यां सर्वेभ्यो नमः इति बलिं दद्याच्चामेन इति मंडपपूजा अथ गुरुर्मंडले वा सर्वतोभद्रदेवताः सामा
न्यप्रयोगोक्ताः आवाह्य संपूज्य स्वकुंडे अग्निं स्थापयेत् ततः सर्वेपि होतारस्तमेवाग्निं स्वस्वकुंडे प्रणयेयु ततो गुरुः प्रासादांत

प्रति री शान्त्यानौ र्के स्यां वा हस्त मित वेद्यां चतुः षष्टि पदे वास्तु पीठे सामान्य प्रयोगोक्ताः शिख्यादि देवता आवाह्य संपूज्य ताभ्यो च लिं दद्या
४ त् कुंडे कुर्वन्त्व शाखीय पूर्वो गोन रहोनारः प्रति दैवतम ष्टोत्तर सहस्त्रमष्टोत्तर शतम ष्टाविंशति मष्टौ वा प्रत्येकं समिति लाज्यैः
कुंडे संख्यया विभज्य जुहुयुर्नाममंत्रैः ततः पंचसंख्यया पंचविंशति संख्यया वा बिल्वैस्तद्बीजै र्वा वास्तोष्पत इति च तस्य भिः वा
स्तोष्पते प्रतरणो वा स्थूणा मिति चतुर्हुत्वा अघोरेभ्योऽथ घोरेभ्योऽदुस्साज्येनाष्टोत्तर सहस्त्रमष्टोत्तरशतं वा वास्तो मर्म संधानाय
जुहुयुः ततोऽक्षीणप्रपा वमानसूक्ताभ्यां त्रिसूत्र्या प्रासादं वेष्ट्य परितो जलदुग्धायोः पृथगविच्छिन्नधारां दत्वा पीठे पूजिता
हैमी वास्तु प्रतिमां दधिदूर्वा सप्तधान्य शैवालगंधाक्षत पुष्पयुते ऽपक्व मृद्भांडे संस्थाप्य तत्सिधा थच तुःषष्टिधा भाजित ग्रा
सादा ग्नेयकोणे कोणपदादुत्तरे आकाशपदे जानुमात्रं गर्तं कृत्वा जलेनापूर्य गंध पुष्पाणि प्रक्षिप्य मृद्भांडमत्र निधाय गर्ते त
थैव मृदा पूरयेत् मृद आधिक्ये क्षमं दृष्ट्वा वास्तु पूजां कृत्वा गुरुर्मंडपे ऐशान भागे वेद्यां ग्रहानधि देवताः प्रत्यधिदेवता विना
यकादीन्पंचलोकपालांश्चावाह्य संपूजयेत ततो ऋत्विजः समिच्चर्वाज्यैरष्टोत्तर सहस्त्रमष्टोत्तर शताष्टाविंशत्याष्टान्यतम
संख्यया कुंडेषु विभज्य हुत्वा बलीन्दत्वा पूर्णाहुतिं जुहुयुः एतन्मन्त्रप्रकारादिकं सामान्य प्रयोगे उक्तम् अथ गुरुः स्नानमंड
पे ॐ नमो मानसपणाये त्यभिमंत्रित पंचगव्येन भूमिवेदिकात्र पंच संप्रोक्ष्य ततो दक्षिणवेदिकायामास्तृत वालुकायाम क्षतैः
स्वस्तिकं कृत्वा तत्र च भद्रपीठं निधाय वेदिकायाः पश्चाद्द्वारि पूर्णान्सपल्लवान्ष्ट कलशान् मृत्पल्लवदर्भोपकषायगोमूत्र

गोमयभस्मगंधोदकैः प्रपूर्य उदक्संस्थपंक्तिरूपेणाच्छादयेत् तत्रास्संस्थापतिकलशाः भद्रपीठपुनमध्ये वेदिकापश्चिमे एवं
स्थपतिकलशातिरिक्ता एकादश भद्रपीठोत्तरवेद्यास्तूपरि तोष्टौकलशान् पूर्वादिक्रमेण क्षारोदक क्षीरदधि सर्पिः सुरा
इक्षुरस दूर्वोदक दर्भोदकपुतान् हिरण्यगर्भाद्यैरष्टभिर्मंत्रैर्विन्यसेत् ततोन्येचवेद्याः पश्चिमभागे मृत्तिका गोमूत्र गोम
य भस्ममिलितपंचगव्य क्षीर दधि घृत शर्करापुतदशकलशाः चतुर्दशभद्रजलकलशाः अथान्यस्त्वेवं त्रिंशत्कलशाना
स्थापयेत् तत्र पंचसु पृथक् पंचामृतानि पंचसु जलं पंचसु पल्लवकषायः दशसु क्रमात् पुष्पैः फलैः सौवर्णजलेन गो
शृंगोदकेन धान्यैः सहस्रच्छिद्रैः सर्वौषधिभिः पंचपल्लवैः दूर्वाभिर्नवपूताः कार्याः अवशिष्टेषु दशसु शुद्धजलमापूर्य
लोकपालानावाह्य सर्वेष्वा कलशेष्विदं स्थापनेन स्थाप्याः सूक्ष्मवस्त्र स्रगंधतैलं यवचूर्णमुद्वर्तनार्थमामलकीचूर्णं स्रगाधं ॥
उदामांसि वासादयेत् तदंते तीर्थोदककलशेषु सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः आयांतु यजमानस्य दुरितक्षयका
रकाः इत्यादि तीर्थान्यावाहयेत् ततः यजमान आचार्यो मूर्तिस्थपतिभ्यां सह स्नपनमंगलघोषकमेकुरीं गत्वा भूमावुपलिप्य वि
धिवदग्निं स्थापयित्वा प्रतिमानिर्माणे प्राणिवधादिदोषनिरासार्थं घृतेन तिलैर्वा होमं करिष्ये इति संकल्प्याज्यभागान्तं कृ
त्वा देवमंत्रेणाज्याहुतिशतद्वयं हुत्वा पूर्णाहुतिं हुत्वा प्रतिमां कुशैः संमार्ज्य मधुघृताभ्यंगेन देवस्य व्रणभंगं कृत्वा पंचग
व्येन पृथक् पृथक् स्नापयित्वा पुनः संपूज्य शंखवादेन रथादिना देवं महामंडपात् दक्षिणेन स्नानमंडपमानयेत् तत्र गु

नां। मद्दक्षिणवेद्याभद्रकर्णेभिरितिपात्र·मुखंदेवभद्रासनेनिवेश्य पूर्वकल्पितषट्कंलशेष्वंभंहिरण्यादिसहितंकलशंदेवस
मीपेनिधाय काशीकुरुस्थलीमायावंत्सपोध्याःमधोःपुरी शालिग्रामसंगोकर्णनर्मदाचसरस्वती तीर्थान्येतानि
कुंभेस्मिन्‌विशन्तुब्रह्मशासनात्‌ श्रपारूढासरोजाक्षीपद्महस्ताशशिप्रभा आगच्छतुसरिच्छ्रेष्ठागंगापापप्रणाशि
नी नीलोत्पलदलश्यामापद्महस्ताम्बुजेक्षणा आयातुयमुनादेवीकूर्मयानस्थितासदा प्राचीसरस्वतीपुण्यापयो
ष्णीगोतमीतथा ऊर्मिलाचंद्रभागाचसरयूगंडकीतथा जंबुकाचशतद्रुश्चकालिकासप्रभातथा वितस्ताचविपा
शाचशर्मदाचपुनःपुनः गोदावरीमहावर्ताशर्करावर्तमार्जनी कावेरीकौशिकीचैवतृतीयाचमहानदी विशंकाप्रतिकूल
चसोमनंदाचविश्रुता·करतोयावेत्रवतीदेविकावेणुकाचया आत्रेयगंगावैतरणीकाश्मीरीन्हादिनीचया सुप्राविनीच
त्रावत्रासाकल्माषाशंखिनीतथा वसिष्ठाचअपापाचसिंधुवत्याहृणीतथा नाम्नाचैवत्रिसंध्याचतथामंदाकिनीपरा तै
लकाद्रीचपराचदुंदुभिनीकुलीनथा नीलगंधावबोधाचपूर्णचंद्राशशिप्रभा अमरेशंप्रभासंचनैमिषंपुष्करंतथा।
आषाढीडिंडिभारत्नभारभूतंवलाकुलम्‌ हरिश्चंद्रंपरंगुह्यंमध्यमध्यमकेश्वरं श्रीपर्वतंसमाख्यातंजलेश्वरमतःपर॥
आम्रातकेश्वरंचैवमहाकालंतथेवच केदारमुत्तमंगुह्यंमहाभैरवमेवच गयाचैवकुरुक्षेत्रंगुह्यंकनखलंतथा विमल
चंद्रहासंचमाहेंद्रंभीममष्टमं वस्त्रापदंरुद्रकोटिंअविमुक्तंमहालयम्‌ गोकर्णभद्रकर्णंचहेमाहंस्थानमष्टमम्‌ छाग

त्वाक्षं दिंडिचक्रकोटिसंङ्गमेश्वरम् कालंजरवनं चैव देवदारुवनं तथा शंकुकर्णं तथैवेह स्थलेश्वरमतः परम् एतानंघ्रस्तीर्था
नि गुह्यक्षेत्राणि सर्वशः तानि सर्वाणि कुंभेस्मिन्विशंतु ब्रह्मशासनादिति मंत्रेण तीर्थानि तत्रावाह्य देवं स्नापयेत् यजमान
स्त्रुभिः स्विवर्गं यथाशक्ति पूजयेत् ततो गुरुर्बहिर्निर्गत्य सिद्धार्थघृतपायसैरस्यांधक मिति प्रागादिदिक्षु बलिं दत्वाचम्य देवस
मीपमागत्य त्रातारमिंद्रमित्यादि दशलोकपालमंत्रैर्मंडपांतर्दिक्षु रक्षां कृत्वा देवस्याग्रे चतुरो ब्राह्मणानुपवेश्य स्वस्तिवा
चयेत्तेभ्यश्च दक्षिणां दत्वा देवं स्नापयेत् अग्निर्मूर्धेति मृदा यत्ता यत्ता वद्रिति कषायैः गायत्र्या गोमूत्रेण गंधद्वारामिति गोमयेन
मानस्तोकइति भस्मना तत्सवितुरित्यभिधत्तोपनः ततः पंचकलशेन पंचदैवत्यैः नमः शंभवेति प्रथमेन हंसः शुचिषदि
ति द्वितीयेन पातेरुद्रेति तृतीयेन विष्णोरराटेति चतुर्थेन ब्रह्मजज्ञानमिति पंचमेन संस्नाप्य शतजीवेति दूर्वाक्षतपुष्पैः सं
पूज्य वस्त्रेणाच्छाद्य द्वितीयवेद्यां भद्रं कर्णेभिरिति मंत्रेण भद्रासनं निधाय स्तीर्णं बर्हिरिति प्रागग्रान्कुशानास्तीर्य तत्रप्रपावे
तद्देवं निधाय प्राङ्मुखमुदङ्मुखोभूत्वा कुंकुमाक्तेन सूत्रेण लिंगमावेष्ट्य प्रतिमायामुखं लिंगस्य च नेत्राणि सुवर्णशलाकया
चित्रं देवानामित्यर्धर्चेन कल्पयेत् ऊर्ध्वाधः पृथग्भूतं पद्मपुटद्वयं वा कृष्णेनेति कल्पयेत् नेत्रमध्ये त्रिभागेन कनीनिकामि
ति कल्पयेत् न दानकश्चित्पुरतस्तिष्ठेत् सुवर्णपात्रस्थमभक्षभांडमादर्शं च वशीघ्रं दर्शयेत् ततः शिल्पी लोहेनोल्लिखेत गुरु
र्मधुसर्पिर्भ्यामभ्यंजेमं मे गंगे इति मंत्रेणाभ्यज्य पुनर्मृद्गोमयाभ्यां स्नापयेत् यजमानः सुवर्णशलाकां स्नानवस्त्रादिकं च शि

प्रति स्थिनेदत्वा सहिरण्यांगांगुरवेदद्यात् गुरुरुत्तरस्यांवेद्यांभद्रासनेदेवंस्थापयित्वा कलशेनसमुद्रज्येष्ठाइतिमंत्राप्यसंपूज्यद्
६ र्वाक्षतान्मूर्ध्निदत्वाप्रार्थयेत् नमस्तेत्र्यंबकरेशानिचक्रतेविश्वकर्मणः प्रभाविताशेषजगद्धात्रि तुभ्यंनमोनमः त्वयिसंपूज्
यामीशंनारायणमनामयं हरिताशेषदोषैश्चऋद्धियुक्तासदाभवेति ततोदेवस्यदक्षिणहस्तेप्रतिमाविनस्ति मात्रमूर्णासू
त्रंकनिक्रदद्दितिमंत्रेणवध्नीयात् सर्वमंगलमयंशांतपरंब्रह्मसनातनम् त्वामेवालंकरिष्यामित्वंवंद्योभवतेनमः इतिप
ठित्वा चतुर्भिः कलशैःस्नपयेत् इदमापइत्याद्येन।। आपोदेवीरितिद्वितीयेन इमंमेगंगेइति तृतीयेन त्वत्तापामीति
चतुर्थेन ततोभिर्मूर्धेत्यष्टपलमृत्तिकाकलशेनवरुणस्योत्तंभनमसीतिशुद्धोदकेना तत्सवितुरितिद्वादशपलगोमूत्रकल
शेना आपोहिष्ठेतिशुद्धोदकेन प्रसद्येतिमुष्टिसंमितभस्मकलशोदकेन योवइतिशुद्धोदकेन पयः पृथिव्यामितित्रिप
लसंमितपंचगव्यकलशोदकेन देवीरापइतिशुद्धोदकेन आप्यायस्वेतिषोडशपलक्षीरकुंभेन तस्माअरंगमामवइति
शुद्धोदकेन दधिक्राव्णइतिपंचविंशतिपलदधिकुंभेन युंजानइतिउदकेनाघृतवतीतिसप्तपलघृतकुंभेन देवस्यत्वे
तिजलेन मधुवाताइतित्रिपलमधुकुंभेन आपोअस्मानितिजलेन आयंगौरितित्रिपलशर्कराकुंभेन आपोहयद्बृहती
इत्युदकेनप्रक्षाल्य यत्रायत्रावइतिवस्त्रेणसंमार्ज्य स्रुगंधतैलेनाभ्यज्य द्रुपदादिवेतियवशालिगोधूममसूरबिल्वचूर्णे
रुद्वर्त्य पात्रेरुद्रमिवाननृरितिपक्षकर्दमेनानुलिंपेत् पक्षकर्दमस्तु कस्तूरिकायाद्वौभागौद्वौभागौकुंकुमस्यचंदनस्य

त्र्पोभागाः शशिनस्त्वेक एवहीत्युक्तः ततोजटामांस्यानुलिप्य मानस्तोकेयत्तद्विष्णुरितिकलशद्वयेनस्नापयित्वा आयामसो
ममितिपंचामृतेन अयंराजावरुणोनुमन्यतांविप्रोपथासंक्षेपयोसि आप्यायस्वमदिंतमसोमविश्वाभिरूतिभिः अप्स्वग्ने
सधिष्टवइतिपंचभिः क्षालयेत् गंधद्वारामितिगंधोदकेन यत्रायत्रावइतिपंचपल्लवकषायकलशेन याओषधीरितिओ
षधीरिति ओषधिकलशेन ओषधीरितिसितपुष्पकलशेन शांतापृथिवीतिशांत्युदककलशेन याःफलिनीरित्यष्टफल
कलशेन हिरण्यगर्भइतिसुवर्णकलशोदकेन हविष्मतीरितिशृंगोदकेन धान्यमसीतिधान्योदकेनसह स्नास्मितिस
हस्रधाराकलशोदकेन यादिव्याइतिसर्वौषधिजलेन नमोस्तु सर्पेभ्यइतिपंचपल्लवोदकेन अष्टौव्यख्यत्ककुभइतिर
लोदकेन इमंमेगंगेइतितीर्थोदकेन पुनरष्टभिःकलशैःपूर्वकल्पितैःसमुद्रसंज्ञितैः स्नपयेत् कयानश्चित्रमितिक्षारोदकेन
आप्यायस्वेतिक्षीरकुंभेन दधिक्राव्ण इतिदधिकुंभेन घृतवतीतिघृतकुंभेन पयः पृथिव्यामितिइक्षुरसकुंभेन देवंबर्हिरिति
स्रोदककुंभेन स्वादिष्ठयेतिस्वादूदकेन सरस्वतीयोन्यामितिगर्भोदकस्य पुनर्दशभिर्लोकपालकलशैः स्नापयेत् तत्रचा
नार्मितिकदंबपल्लवकुंभोदकेन तन्नोअग्नेइतिशाल्मलिपल्लवेन स्रुगन्नः योथेतिजंबूपल्लवेना अश्मन्वंतमिति अशोकप
ल्लवेन तत्त्वायामीतिप्लक्षपल्लवेन स्रुगन्नः पथेतिजंबूपल्लवेन अश्मन्वंतमिति अशोकपल्लवेनतत्त्वायामीतिप्लक्षपल्ल
विन वायोयेतइतिचूतपल्लवेन वयंसोमेतिवटपल्लवेना नमोशानमितिविल्वपल्लवेन नमोस्तुसर्पेभ्यइतिनागपल्लवेन॥

प्रति
७

वसुजज्ञानमितिपलाशपल्लवेन ततः कमंगलघोषैश्चतुर्भिः कुंभैरेकेन वा कुंभोदकेन देवं स्नापयित्वा सुगंधिना सितवस्त्रे
ण परिमृज्य विश्वतश्चक्षुरिति संकल्पीकृत्य देवमावाहयेत् एह्येहि भगवन्विष्णो लोकानुग्रहकाम्यया यज्ञभागं गृहाणेमं
वासुदेव नमोस्तु ते हिरण्यवर्णेति पाद्यमर्घ्यं विभ्राडिति आचमनीयं त्र्यंबकमिति चंदनादि वेदाहमित्युपवीतम् युवा
सुवासा इति वस्त्रं वेदाहमित्युत्तरीयम् इदं विष्णुरिति पुष्पम् धूरसीति धूपं चंद्रमा मनसः इति दीपम् अन्नपते इति नैवेद्यं ॥
आचमनं पुष्पांजलिं दत्वा प्रार्थनां कृत्वा स्नानवस्त्रनैवेद्यादिकं शिल्पिने दद्यात् इति देवस्नपनविधिः अथ पुरुषसूक्तेन
स्तुत्वा उत्तिष्ठोत्तिष्ठ गोविंद त्यज निद्रां जगत्पते त्वयि सुप्ते जगत्सुप्तं उत्थिते चोत्थितं जगदिति तमुत्थाप्य रथमारोप्य
प्रासादप्रादक्षिण्येनानीय यागमंडपपश्चिमद्वारि आकृष्णेनेति प्रवेश्य पश्चिमभागे उपवेश्य मधुपर्कं कुर्यात् ततो वेद्यां
कुशानास्तीर्य तदुपरि शय्यामास्तीर्य वेद्याः पूर्वादिदिक्षु विष्णुमधुसूदनत्रिविक्रमवामनानाग्नेय्यकोणेषु श्रीधरहृषी॰
केशपद्मनाभदामोदरांश्च पूजयेत् शिवादिप्रतिष्ठायां तु नमः शंभवे इति शय्यां निवेश्य पूर्वादिदिक्षु भवं शर्वमीशानं प
शुपतिं आग्नेयादिकोणेषु रुद्र उग्रं भीमं महांतं च पूजयेत् ततः शय्यायां देवं स्थापयित्वा त्रिभिर्वस्त्रैर्देवमाच्छाद्य देव
स्य शिरोदेशे भूमौ सहिरण्यं निद्राकलशं नमो देवीरुपव्हयेदिति आप्यायस्वेति मधुसर्पिभ्यां देवमभ्यज्य या ते रुद्रेति तिल
सर्षपैः उपलिप्य गंधादिनाभ्यर्च्य बृहस्पते परीति सितं परिधानं दद्यात् अत्र देवस्य बृहस्पते परीति मंत्रेण हस्ते कंकण

वंधनमित्येके ततोदेवस्यपादनाभिवक्षः शिरस्कविश्वतश्चक्षुरित्यालंभनं ततस्तुदक्षिणपार्श्वेवृंतव्यंजनं चरणदेशेपादु

का पार्श्वयोः शांतिकुंभौ आसनंदर्पणघंटाभक्ष्यभोज्यजलपात्रादिकंचदेवस्यपुरतः स्थापयेत् भूतेभ्यः भस्म दर्भतिलैर्दे

वस्यपरितोरक्षार्थंप्राकारत्रयंकृत्वामंडपाद्बहिर्गत्वाप्रतिदिशंलोकपालेभ्योगंधादिपूर्वकंवलिंदत्वाभूतेभ्यश्चत्र्यवकमिति

वलिमंत्रस्तु पूर्वादिग्वादिभ्योदिक्पतिभूताधिपतिदिग्रदादिकुमातृदिक्क्षेत्रपालेभ्योनमइत्येवंप्रतिदिशं ततः आचम्य

होमंकुर्यात् तद्यथा ॐ परायविष्ण्वात्मनेनमः स्वाहेतिविष्णवे अन्यदेवतायांशिवात्मनेनमइत्याद्यूहः अनेनाष्टो

त्तरशतमष्टाविंशतिरष्टौवातिलैर्यवैर्वाप्रत्येकंहुत्वाप्रतिमायान्यासंकुर्यात् अंपादयोः ॐ हृदये मंललाटे इतिप्रणव

न्यसेत् ऊंदक्षिणकर्णे ऊंवामकर्णे ऋंदक्षिणेगंडे ॠंवामगंडे लृंदक्षिणनासापुटे लॄंवामनासापुटे एंऊर्ध्वोष्ठे ऐंअधरोष्ठे

ॐ ऊर्ध्वदंतपंक्तौ औं अधोदंतपंक्तौ अंललाटे ॥ ० ॥ अः जिह्वायां पंत्वचि रंचक्षुषोः लंनासिकायां वंदर्शनेषु शंश्रो

त्रयोः षंउदरे संकटौ हंहृदये क्षंनाभ्यां लंलिंगे पफवंभदक्षिणवाहौतथादंधनवामवाहौ टंठंडंढणंदक्षिणजंघायां चं

छंजंझंञंवामजंघायां कंखंगंघंङं सर्वांगुलिषु इतिमातृकान्यासः ॐ रविचंद्राभ्यांनेत्रयोः भौमायहृदये वुधायस्कंधे वृहस्प

तयेजिह्वायां शुक्रायलिंगे शनैश्चरायललाटे राहवेपादयोः केतुभ्यः केशेषु रोहिणीभ्योहृदये मृगशिरसेशिरसि आ

र्द्रायैकेशेषु पुनर्वसवेललाटे पुष्यायमुखे आश्लेषाभ्योनासायां मघाभ्योदंतेषु पूर्वाफाल्गुनिभ्योदक्षिणकर्णे उत्तराफाल्गु

द भूः पादयोः भुवः हृदये स्वर्ललाटे ॥ इतिव्याहृतीन्यसेत् अंतालुके आंमुखे इंदक्षिणनेत्रे ईंवामनेत्रे ॥ त्रुटपंक्ति द

निभ्योवामकर्णे हस्तायहस्तयोः चित्रायैदक्षिणभुजे स्वात्यैवामभुजे विशाखाअनुराधाभ्यस्तनयोः ज्येष्ठाभ्योदक्षिणकुक्षौ
मूलायवामकुक्षौ पूर्वाषाढभ्यः कटिपार्श्वयोः उत्तराषाढाभ्योलिंगे श्रवणधनिष्ठाभ्योवृषणे शतभिषेभ्योनेत्रे पूर्वा
भाद्रपदाउत्तराभाद्रपदाभ्योऊर्वोः रेवतीभ्योगश्विनीभ्योजंघयोः भरणिकृत्तिकाभ्यः पादयोः ध्रुवायनाभ्यां सप्तर्षि
भ्यः कंठे मातृकामंडलायनमः कटिदेशेविष्णुपदेभ्यः पादयोः नागवीथ्यै अंगवीथ्यैवनमालायां ताराभ्योरोमकूपे
षु अगस्त्यायकौस्तुभे इतिग्रहादिन्यासः चैत्रायनमः शिरसि वैशाखायमुखे ज्येष्ठायहृदये आषाढायश्रावणायभ
स्तनयोः भाद्रपदायउदरे आश्विनायकट्यांकार्त्तिकायमार्गशीर्षायऊर्वोः पौषायमाघायजंघयोः फाल्गुनायपाद
योः संवत्सरायपरिवत्सराय इडावत्सरायवत्सरायनमः इतिदक्षिणीध्वात् ग्रादक्षिण्येनचतुर्षुबाहुषु पर्वतेभ्योनमः
संधिषु ऋतुभ्योलिंगे अहोरात्रेभ्योअस्थिषु क्षणापलवायकाष्ठायैरोमसु कृतायमुखे त्रेतायैहृदयोः द्वापराय
नितंबे कलियुगायनमः पादयोः मन्वन्तरेभ्योबाहवो परायपरार्धायजंघयोः महाकल्पायशरीरे उदगयनायदक्षिणा
यनायपादयोः विषुवनेसर्वांगुलीषु इतिकालन्यासः ब्राह्मणायमुखे क्षत्रीयायबाह्वोः वैश्यायऊर्वोः शूद्रायपादयोःसं
करजेभ्योनमः पादाग्रे अनुलोमजेभ्योनमः सर्वांगसंधिषु गोभ्योनमः मुखे अजाविकाभ्योनमः हस्तयोः ग्राम्यारण्यपशु
भ्योनमः सर्वत्र इतिवर्णन्यास मेघेभ्योनमः केशेषु अभ्रेभ्योनमः रोमसु नदीभ्योनमः सर्वगात्रेषु समुद्रेभ्योनमः कुक्षिदेशे

इतिगौणन्यासः ऋग्वेदायनमः शिरसि यजुर्वेदायनमोदक्षिणभुजे सामवेदायनमोवामभुजे सर्वोपनिषद्भ्योनमः हृदये।
इतिहासपुराणेभ्योनमः जंघायोः अथर्वांगिरसेभ्योनमः नाभौ कल्पसूत्रेभ्योनमः पादयोः व्याकरणायवक्त्रे तर्केभ्यः कंठे
मीमांसायैनिरुक्तायहृदये छंदोज्योतिः शास्त्रेभ्योनमः नेत्रयोः गीतभूतशास्त्रेभ्योनमः श्रोत्रयोः आयुर्वेदायदक्षिणभुजे
धनुर्वेदायनमोवामभुजे योगशास्त्रेभ्योनमः हृदये नीतिशास्त्रेभ्योनमः पादयोः वशपतंत्रायनमः ओष्ठयोः इतिविद्या
न्यासः दिवेनमः मूर्ध्नि सूर्यचंद्रलोकायनमोनेत्रयोः अनिललोकायनमोघ्राणे व्योम्नेनमः नाभ्यां समुद्रेभ्योनमो वस्ति
देशे पृथिव्यैनमः पादयोः इतिवैराजन्यासः हिरण्यगर्भायनमः शिरसि कृष्णायनमः केशेषु रुद्रायनमोललाटे यमा
यनमोभ्रुकुट्याम् अश्विभ्योनमः कर्णयोर्वैश्वानरायमुखे महद्भ्योनमोघ्राणे वसुभ्योनमः कंठे रुद्रेभ्योनमः दंते सरस्व
त्यैनमः जिव्हायां इंद्रायनमः दक्षिणभुजे बलयेनमोवामभुजे प्रल्हादायः दक्षिणस्तने विश्वकर्मणेवामस्तने ना
रदायदक्षिणकुक्षौ अनंतादिभ्यो० वामकुक्षौ वरुणायहस्तयोः मित्राय० पादयोः विश्वेभ्योदेवेभ्योनमः ऊरुमध्ये पि
तृभ्योनमः जानुमध्ये यज्ञेभ्योनमः जंघयोः राक्षसेभ्योनमः गुल्फयोः पिशाचेभ्योनमः दक्षिणपादे असुरेभ्योनमः वाम
पादे विद्याधरेभ्योनमः पादयोः ग्रहेभ्योनमः पादतलयोः गुह्यकेभ्योनमः गुदे पूतनादिभ्योनमः नखेषु गंधर्वेभ्यो० ओ
ष्ठयोः कार्तिकेयायगणेशायकटिपार्श्वयोः इतिदेवयोनिन्यासः मत्स्यायनमः मूर्द्धनि कूर्माय० पादयोः नृसिंहायनमः॥

प्रति ललाटे वाराहायनमः जंघयोः वामनायनमः मुखे परशुरामायहृदि रामायवाहुषु कृष्णायनाभ्यां वुद्धायवुद्दौ कल्किनेजा
९ न्वोः केशवायनमः शिरसिनारायणायमुखे माधवाय॰ ग्रीवायाम् गोविंदायनमः वाह्वोः विष्णवेनमः हृदिये मधुसूदना
यनमः पृष्टे त्रिविक्रमाय॰ कट्यां वामनायनमः जठरे श्रीधरहृषीकेशाभ्यां॰ जघयोः पद्मनाभायनमः गुल्फयोः दामोद
रायनमः पादयोः इतिमूर्तिन्यासः अश्वमेधायनमः मूर्ध्नि नरमेधायनमः ललाटे राजसूयायनमः मुखे गोसवायनमः कं
ठे द्वादशाहायनमः हृदि आधीनेभ्योनमः नाभौ सर्वजितेभ्योनमः दक्षिणकट्यां सर्वमेधाय॰ वामकट्यां अग्निष्टोमायलिं
गे अतिरात्रायनमः वृषणयोः आप्तोर्यामायऊर्वोः षोडशिनेजान्वोः उतथ्याय॰ दक्षिणजंघायां वाजपेयायनमः वामजं
घायां अत्यग्निष्टोमायदक्षिणवाहौ चातुर्मास्यायनमः वामवाहोः सौत्रामण्यै॰ हस्तेषु पशुइष्टिभ्योनमः अंगुलीषु द
र्शपौर्णमासाभ्यां॰ नेत्रयोः सर्वेष्टिभ्यो॰ रोमकूपेषु स्वाहाकारायवषट्कारायनमः स्तनयोः पंचमहायज्ञेभ्यः पादांगुलीषु
आहवनीयायमुखे दक्षिणाग्नयेहृदये गार्हपत्यायनाभौ वेद्यैउदरे प्रवर्ग्यायभूषणेषु सवनेभ्यः पादयोः इध्मेभ्यो॰ वा
हुषु दर्भेभ्योनमः केशेषु इतिक्रतुन्यासः अथमूलन्यासः आयुधन्यासः शक्तिन्यासः अंगन्यासः इतिसाधारणाः सर्वत्र वै
ष्णवमधीकृत्यउच्यते धर्मायमूर्ध्नि ज्ञानायहृदि वैराग्यायगुल्फे ऐश्वर्यायपादयोः खड्गायशिरसि शार्ङ्गायमस्तके मुशलाय
दक्षिणभुजे हलायवामभुजे चक्रायनाभ्यांजठरे पृष्टे च शंखायलिंगेवृषणेच गदायैजंघयोर्जान्वोश्च पद्मायगुल्फयोः॥

पादयोः वज्रायशक्तये दंडायखड्गायपाशायध्वजायअंकुशायत्रिशूलायपद्मायेतिशिवेदृत्यायुधन्यासः लक्ष्म्यैनमोललाटे सरस्वत्यैनमोमुखे रत्यैनमोगुह्ये प्रीत्यैयमः कंठे कीर्त्यैनमोदिक्षु शांत्यैनमोहृदि तुष्ट्यैनमोजठरे पुष्ट्यैनमः सर्वत्र इतिशक्तिन्यासः अथमूलमंत्रन्यासः हृदयंहृदये शिरःशिरसि शिखाशिखायां कवचंसर्वत्र नेत्रयोर्नेत्रे करयोरस्त्रं दक्षिणवाम स्तनयोः श्रीवत्सायनमः उरसिकौस्तुभाय कंठेवनमालायै इत्यंगन्यासः ॐपादयोः नंजान्वोः मोंगुह्ये भंनाभौ गंहृदये ॥ वंकंठे तेंमुखेवानेत्रयोः सुंभाले देंमूर्ध्नि वांदक्षिणपार्श्वे यंउत्तरपार्श्वे इतिद्वादशाक्षरन्यासः अथप्रतिमायांजीवस्य सः तत्रतेजोभावयित्वा बुद्धीन्द्रियकर्मेन्द्रियमनः प्राणपंचकाहंकारशब्दतन्मात्रादिकंसर्वंसंयोज्य पुरुषभावंसंभावयित्वा सर्वसाक्षिणंभावयित्वा तत्रतत्त्वन्यासंन्यसेत् तद्यथा आत्मतत्त्वायनमः आत्मतत्त्वाधिपतयेब्रह्मणेनमः पादयोः विद्यातत्त्वाय० विद्यातत्त्वाधिपतयेविष्णवेनमः हृदये शिवतत्त्वाय० शिवतत्त्वाधिपतयेरुद्रायनमः शिरसि अथगायत्रीन्यासः तत्पादांगुष्ठयोः संगुल्फयोः विंजंघयोः तुंजान्वोः वंऊर्वोः रेंगुदे णिंवृषणे यंकटौ भंनाभौ गजठरे देंस्तनयोः वत्सहृदि स्यकंठे धींवक्त्रे मताल्वदेशे हिंनासिकाग्रे धिचक्षुषोः योंभ्रूमध्ये योललाटे नः पूर्वे प्रदक्षिणे चोंपश्चिमे दउत्तरे पामूर्ध्नि तत्सर्वत्र तत्सवितुर्हृदि वरेण्यंशिरसि भर्गोदेवस्यधीमहिकवचे धियोयोनः नेत्रयोः प्रचोदयादस्त्रे इतिगायत्रीन्यासः अंचमंत्रन्यासः अग्निमीळेपादयोः इषेत्वेतिगुल्फयोः शंनोदेवीतिजान्वोः बृहद्रथंतरेतिऊर्वोः स्वस्तिनःजठरे दीर्घायु

ख्यात्हृदये श्रीवत्सेनेतिकंठे त्रातारमितिवक्त्रे त्र्यंबकमितिस्तनयोः नेत्रयोः मूर्धानमितिमूर्ध्नि अथद्वादशाक्षरनारायणस्यमूर्ति
न्यासः ओंकेशवाय इतिशिरसि नंनारायणायेतिमुखे मोंमाधवायेतिग्रीवायां भंगोविंदायेतिकंठे गंविष्णवेइतिपृष्ठे वंमधु
सूदनायकुक्षौ तेंत्रिविक्रमायकट्यां वांवामनायनमः जंघयोः सुंश्रीधरायगुह्ये देंहृषीकेशायदक्षिणगुल्फे वांपद्म
नाभायवामपादे यंदामोदरायदक्षिणे अंहृंहृदयायनमः हृदये ओंविष्णवेनमः शिरसि वह्नयेशिखायां क्रवायकवने
चक्रिणेनेत्रयोः चक्रिणेनमः अस्त्रायफट् अस्त्रंहस्तयोः नमः शंभवेइतिगायत्र्यैदक्षिणनेत्रे विजयायनमः सावित्र्यै
वामनेत्रेचक्रिणेचक्ररूपायपिंगलास्त्रंसर्वदिक्षु इत्यष्टांगविष्णुमंत्रन्यासः सहस्रशीर्षेतिपादयोः पुरुषएवेतिजंघयोः ए
तावानस्यातिजान्वोः त्रिपादूर्ध्वमित्यूर्वोः तस्माद्विराडितिवृषणे तस्माद्यज्ञादितिकट्यां तस्माद्यज्ञात्सर्वहुतइतिनाभ्यां
तस्मादश्वाइतिहृदि तंयज्ञमितिस्तनयोः यत्पुरुषमितिबाह्वोः ब्राह्मणोस्येतिमुखे चंद्रमामनसश्चक्षुषोः नाभ्याआसी
दितिकर्णयोः यत्पुरुषेणेतिभ्रुवोः सप्तास्येतिभाले यज्ञेनयज्ञमितिशिरसि अद्भ्यःसंभृतइतिहृदये वेदाहमितिशि
रसि प्रजापतिः शिखायां योदेवेभ्यःकवचे रुचंब्राह्मेतिनेत्रयोः श्रीश्चतेलक्ष्मीश्च इतिपुरुषसूक्तन्यासः अथशिवस्यपंचवक्त्र
न्यासः अंगुष्ठयोरीशानं तर्जन्योस्तत्पुरुषम् मध्यमयोरघोरं अनामिकयोर्वामदेवं कनिष्ठिकयोःसद्योजातं ततःकनिष्ठि
कयोर्हृदयं अनामिकयोःशिरः मध्यमयोःशिखा तर्जन्योःकवचं अंगुष्ठयोरस्त्रंविन्यस्यपरेणतेजसासंयोज्य कवचेनावगुंठ्य

सर्वकर्मसु नियोजयेत् आचमनं सर्वत्र इत्थं देवस्य करन्यासं कृत्वा लिंगमुद्रां बध्वा ईशानः सर्वविद्यानामीश्वरः सर्व
भूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् इति मंत्रेणेशानमुष्टिं बध्नीयात् ततः अंगुल्यग्रे रु
द्रमूर्तये मूर्ध्नि तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् इति तर्जन्यंगुष्ठयोरेवं गात्रम् तत्पुरुषमुखे
अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः इति मध्यमांगुष्ठयोगेन हृद्यघोर
म् वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय
नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः इत्यनामिकांगुष्ठयोगेन गुह्ये सद्योजातं प्रपद्यामि स
द्योजाताय वै नमो नमः भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः इति कनिष्ठिकांगुष्ठयोगेन पादादारभ्य मस्तकांत
म् यावन्मूर्तिमावकत्वेन ब्रह्मन्यसेत् ततः ईशानः सर्वविद्यानां नम इति शशिनमुष्णीतन मूर्ध्नि ईश्वरः सर्वविद्यानामि
तिकल्पितं चंद्रोभयद्रलं पूर्वां मूर्ध्नि ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिरिति हृष्टां दक्षिणमूर्ध्नि शिवो मे अस्तु नम इति मरीच्यामुत
रमूर्ध्नि सदाशिवो नम इति ज्वालिनीं पश्चिममूर्ध्नि तत्पुरुषाय विद्महे नम इति पूर्ववक्त्रे शांतिं महादेवाय धीमहीति दक्षि
णवक्त्रे विद्यां तन्नो रुद्र इत्युत्तरवक्त्रे प्रतिष्ठां प्रचोदयादिति पश्चिमवक्त्रे धृतिं इति तत्पुरुषस्य कलाचतुष्टयन्यासः ततो
अघोरेभ्यो नम इति तमामरसि अथ घोरेभ्यो मोहायै नम इति ग्रीवायाम् घोरेभ्योऽक्षमायै इति स्कंधयोः घोरतरेभ्यो निद्रायै

प्रति नमइतिनाभौ सर्वेभ्यः सर्वख्याध्येनमइतिकुक्षौ सर्वशर्वेभ्यःमृत्सवेनमइतिपृष्ठे नमस्ते अस्तुरूपायेनमइतिवक्षसि रुद्ररूपेभ्यः
१९ तृषायेनमः इतिउरसि इत्यष्टावाघोरकलान्यासः वामदेवानमइतिर्जापुदे ज्येष्ठायेनमइतिरक्षालिंगे श्रेष्टायनमइतिरति
दक्षिणोरौ रुद्रायनमइतिकामावामोरौ कालाय दक्षिणजानौ कलविकरणायनम इतिसंजीविन्यौवामजानौ वलविकरणा
यक्रियायेदक्षिणजंघायां वलायनमोवृध्येवामजंघायां वलविकरणायनः ध्रायायेदक्षिणस्फिचि वलप्रमथनायधात्रीवा
मस्फिचि सर्वभूतदमनायनमइतिब्रह्माणीकत्यां मनसेनमइति शोषिणादक्षिणपार्श्वे उन्मनायनमइतिवामपार्श्वे
इतित्रयोदशाकलान्यासः सद्योजातंप्रपद्यापिन मइतिसिद्धिदक्षिणपादे सद्योजातायनमइतिऋद्धिवामपादे भवेनमइ
तिजयांदक्षिणपाणौ अभवेनमइतिलक्ष्मीवामपाणौ नातिभवेमेधानासायां भवस्वमांममइतिकांतिशिरसि भवाय
नमइतिस्वधांदक्षिणबाहौ उद्भवायनमइतिप्रभांवामबाहौ इतिसद्योजाताष्टकम् ततस्तमाद्याः सर्वाः कलाअत्रविशं
त्विति कलान्तरन्यासभावनांकृत्वामुद्राः प्रदर्शयेत् विद्यादेवंहंससपाद्यंहंसहंसेतिहृदयादिन्यासकुर्यात् अथनृसिंहे नृ
सिंह उग्ररूपज्वलज्वलप्रज्वलस्वाहा इतिमंत्रनारसिंहोयदास्थाप्यस्त्वधिवास्यनिशागमे कृत्रिमवाथसाक्षाद्वापपु
टस्वावलिहरेत् इतिन्यासकृत्वा परमेष्ठिनेनमस्कृत्यनिद्रामावाहयाम्यहं मोहिनी सर्वभूतानांमनोविभ्रमकारिणीम्
विरूपाक्षेशिवेशांतिआगच्छत्वंतुमोहिनी वासुदेवहितेकृष्णेकृष्णांवरविभूषिते आगच्छसहसाजस्तस्त्वसंसारमो

हिनी रूपपुष्पसंहरे देवि कुमार्यै कांतमानसे भ्रमनिश्वासवाह्ये वे आगच्छ भुवनेश्वरि नमः सत्वरजोपेते आगच्छ वरवर्णिनि म
नोवुद्धिरहंकारसंहारस्त्वं सरस्वति शब्दः स्पर्शश्च रूपं च रसो गंधश्च पंचमः आगच्छ गृण्ह संक्षिप्य मोहपाशनिवंधिनि भ
वस्यास्ति हनुस्त्वं पावदा भूतसंप्लवम् भुवः कस्यां तसंध्यापां वसमेत्वे चराचरे भोगिशय्याप्रसुप्तस्य वासुदेवस्य शास
ने त्वं प्रतिष्ठासि वेदे विमुनियोनिसमुत्थिते पितृदेवमनुष्याणां सपक्षीरगरक्षसाम् पशुपक्षिमृगाणां च योगमायाविवर्द्धि
नी वसमे सर्वतीर्थेषु मातेव हितकारिणी एहि सावित्रिमूर्तिस्त्वं चक्षुर्भ्यां स्थानगोचरे विशनासापुटे देवि कटे चोत्कंठिता विश
प्रतिभावयं भासर्वं मातृस्त्वं देवि सुंदरि इदमर्घ्यमपाद्यं पूज्येयं प्रतिगृह्यतां उपचारगात्सरभिति तस्याः पूजाविधिः स्मृतः निद्राक
लशेति निद्रां पूजयित्वा लोकपालक्षेत्रपालभूतेभ्यो बलिं दत्वा स्थाप्य देवशय्यां ततः प्राच्यां सर्वतोभद्रे पूजयेत् विष्णुश्चेद्द्वादश
रेचक्रमध्येऽष्टदलेपद्मे मूलमंत्रेण देवं निवेशयेत् ओं हृं हृदयाय नमः इति कर्णिकायां त्रुदयं पूजयेत् विष्णवे नमइति शिरः
पूर्वपत्रे ब्रह्मणे नमइति शिखां दक्षिणे ध्रुवाय नमइति कवचं पश्चिमे चक्रिणे नमइति फट् अस्त्रमुत्तरे शंभवे नमइति गाय
त्रीमाग्नेयदले विजयाय नमइति सावित्रीमीशानदले ज्योतीरूपाय नमो नैर्ऋते चक्रिरूपाय नमइति पिंगलास्त्वायव्ये इति
तिगर्भावरणम् आत्मरूपं पूर्वादिक्रमेण केशवनारायणमाधवगोविंदविष्णुमधुसूदनत्रिविक्रमश्रीधरहृषीकेशपद्मनाभदा
मोदरा इति द्वादशमूर्तीः पूजयेत् इति द्वितीयावरणं प्रागादितः खड्गायनमः गदायै नमः चक्राय नमः शंखाय नमः पद्मा

प्रति यनमः हलायनमः शार्ङ्गायनमः अग्निमूर्त्यधिपतयेनमः यजमानमूर्तयेनमः यजमानमूर्त्यधिपतयेनमः उग्रायनमः अर्क
१२ मूर्तयेनमः इतितृतीयावरणम् अथमूर्तिपाः पृथिवीमूर्तयेनमः पृथिवीमूर्त्यधिपतयेशर्वाय० अर्कमूर्तये० अर्कमूर्त्यधिप
तयेरुद्राय० जलमूर्तये० जलमूर्त्यधिपतयेभवाय० वायुमूर्तये० वायुमूर्त्यधिपतये ईशानाय० इंदुमूर्तये० इंदुमूर्त्यधिपतये
महादेवाय० खमूर्तये० खमूर्त्यधिपतयेभीमाय० इत्यष्टौमूर्तीः तदधिपांश्चार्चयेत् वैष्णवंचेत्तदा पूर्वे पृथ्वीमूर्तये पृथ्वीमू
र्त्यधिपतयेवासुदेवायनमः दक्षिणे जलमूर्तयेनमः जलमूर्त्यधिपतयेसंकर्षणायनमः पश्चिमे अग्निमूर्तयेनमः अग्नि
मूर्त्यधिपतयेप्रद्युम्नायन० उत्तरे वायुमूर्तयेनमः वायुमूर्त्यधिपतये अनिरुद्धायनमः मध्ये खमूर्तयेनमः खमूर्त्यधिपत
येनारायणाय० इति शैवमूर्तिपंचपक्षे ब्रह्मविष्णुरुद्रेश्वरसदाशिवा एवमूर्तियाः इंद्रादयस्तुसर्वत्रपूजनीयाः ततः
आचार्यैः क्रमेणपलाशोदुंबराश्वत्थापामार्गसमिधांप्रत्येकंद्वादशसहस्रंषट्त्रीण्यष्टसहस्रमष्टशतंवाहिरण्यगर्भइति
कुंडसमीपेसंस्थाप्य शांतिकपौष्टिकेमंत्रैः पुष्टिर्नरणवा गयस्फानः अवकमितिपौष्टिकाः ततोमूर्त्याः पूर्वेकुंडेपलाशसमि
धामष्टसहस्रमष्टशतंवाग्निमीळेत्यग्निमीळेतिजुहुयः इषेत्वेतिदक्षिणे अग्न आयाहीतिपश्चिमे शंनोदेवीत्युत्तरे यदाओषधी
कुंडानितदावौषध इतिषट् आग्नेये दशाग्नणवाषड्गायत्रीचौतानैर्ऋते जातवेदसइतिवायव्ये नमोब्रह्मणेइतिईशानकुं
डे मूर्धानंदिवइतिपूर्णाहुतिजुहुयुः आहुतिसंपाताच्छांतिकलशेकुंडसमीपेपातयेयुः ततोमूर्तिपलोकपालेभ्यः समिद्भिः॥

घृतेनतिलैर्वाऽष्टसहस्रमष्टशतंवाजुहुयात् तेषांमंत्रास्तु स्योनापृथिवीतिपृथिवीमूर्त्तेः अघोरेभ्योमूर्त्तिपतेःसर्वस्य इंद्रायदे
इतिइंद्रस्य अग्निंदूतमित्यग्नेः पशूनामित्यग्निमूर्त्तिपतेः पशुपतेः अग्नआयाहीत्यग्नेः असिहिवीरेतियजमानमूर्त्तेः त्वमिं
द्रजोहवीमीति यजमानमूर्त्तिपतयेरुद्रस्य यमायसोममितियमस्य उदुत्यमितिसूर्यमूर्त्तेः आवोराजानमितिसूर्यमूर्त्तिप
तयेरुद्रस्य असन्नवंतमितिनिर्ऋतेः आपोहिष्ठेतिजलमूर्त्तेः विभूषमितिजलमूर्त्तिपतयेभवस्य इमंमेइतिवरुणस्य वात
आवातुइतिवायुमूर्त्तेः तमीशानमितिवायुमूर्त्तिपतयेईशानस्य आनोनियुद्भिरितिवायोः त्वयं सोमेतिसोममूर्त्तेः इं
दंतंभुंभेतिसोममूर्त्तिपतयेमहादेवस्य आदित्प्रत्नस्येतिखमूर्त्तेः मृगोनभीमइतिखमूर्त्तिपतयेभीमस्य अभित्यंदेवं
सवितारमितीशानस्य ततोऽष्टसहस्राष्टशतान्यतमसंख्ययामहाव्याहृतिभिस्तिलयवव्रीहिचर्वाज्यैः क्रमेणप्रत्येकं
जुहुयुः ततोगुरुःस्वाप्यलिंगकेनमंत्रेणघृतेनतिलैर्वाऽष्टसहस्रमष्टशतंवाहुत्वापूर्णाहुतिंकृत्वा देवस्यदक्षिणेकर्णेहो
मंनिवेद्य पूर्वकुंडेघृताहुत्यष्टकंमूलमंत्रेणाहुत्वादेवपादौस्पृशेत् मूलमंत्रेणपूर्वोक्तसंख्ययायाम्यकुंडेहस्तेनदधिहुत्वा
देवनाभिंवारुण्यकुंडेक्षीरंहुत्वाहृदिस्पृशेत् सौम्यकुंडेमध्वाहुतीर्हुत्वामूर्द्धानंस्पृशेत् वारुणकुंडेमिश्रघृतादिचतुष्टयंहु
त्वातेनैवपूर्णाहुत्या देवसर्वांगस्पृशेत् ततःकूर्मशिलाब्रह्मशिलाब्रह्मशिलापिंडिकावाहनानिपरिवारकदेवांश्चवैदिकैर्ना
मंमंत्रैर्वासंपूज्य मुख्यप्रतिमायावामेऽधिवासयेत् तानिमधुघृतेनाभ्यज्यप्रक्षाल्यसंप्रोक्ष्यवस्त्रेणाच्छाद्यप्रधानप्रतिमा

प्रति पिडिकापाः स्वमंत्रन्यासंकुर्यात् तत्रविष्णुश्चेत्स्थाप्यस्तदा ओंघंटंचंपंभंफंलक्ष्म्यैनमः एतानिपंचाक्षराणितद्वच्छिरःशिखा
१२ कवचनेत्रसंयुतकर्णानिहुंफडितिवचनसमुदाय इतिपिडिकायांपंचांगानिन्यस्यतत्वत्रयमूर्तिपांश्च पूर्ववद्विन्यसेत् तदा
ॐ ह्रीं श्रीं ह्रांक्षः पेष ब्रह्मणेसर्वाधारायनमः औं ह्रां श्रीं ह्रीं दिव्यतेजोधारिण्यैपेस्क भगायैनमः इतिमंत्राभ्यामधिवासयेत्॥
इत्यधिवासयेत् इत्यधिवासनम् प्रासादोपिचेन्नूतनस्तस्याप्यधिवासनं तत्रप्रासादाग्रेएकाशीतिपदमंडलमक्षतैःकृत्वा
तेषुपदेषुसप्तधान्यपुंजान्कृत्वा जलपूर्णानेकाशीतिकुंभानात्त्यस तत्रतवनवकोकानांमध्येमध्यमंकोष्ठंत्यक्त्वातेषुकुंभान
मध्यपूर्वादिक्रमेणन्यस्य मध्यकुंभे शम्युदुंबराश्वत्थचंपकाशोकपलाशप्लक्षन्यग्रोधकदंबाम्रविल्वार्जुनवृक्षसमवप
त्वक्द्वादशकंसोमायपवनंस्पर्शनगंगनायनमइतिनिक्षिपेत् ततःपद्मकरोचनादूर्वांकुरदर्भपिंजूलश्वेतपीतसर्षपसितर
क्तचंदनजातीकुसुमनंद्यावर्त्तमितिदशकंपूर्वे यवव्रीहितिलस्वर्णरजतसमुद्रगामिनीकूलमृत्तिकाभूम्यसंस्पृष्टगोम
यमितिसप्तकमाग्नेये सहस्रदेवीविष्णुक्रान्ताभृंगराजमहौषधीशमीशतावरीगुडूचीश्यामाकमित्यष्टकंयाम्ये कदली॥
पूगफलनारिकेलविल्वनारिंगमातुलिंगबदरामलकमितिफलाष्टकंनैरृते मंत्रसाधितंपंचगव्यंवारुणे शम्युदुंबराश्व
त्थन्यग्रोधपलाशकषायपंचकंवायव्ये शंखपुष्पीसहदेवीबलाशतावरीकुमारीगुडूचीवचाव्याघ्रीतिमूलाष्टकंसौम्ये व
ल्मीकादिसप्तमृत्तिकाईशानकुंभेनिधाय हिरण्यवर्णामितिमध्यकुंभानभिमंत्र्य शेषान्गंधोदकेनपूरयित्वा मूलमंत्रे

पाभिमंत्र्य मूत्रेणावेष्ट्यांतर्वहिरधस्तादूर्ध्वंच प्रासादं पंचगव्येन संप्रोक्ष्य मूर्धानं दिव इति वल्मीकमृदा विलिप्य समुद्रज्येष्ठा इती
शामदिक्स्थेन मृत्तिकाकुंभेन स्नपयेत् यज्ञायज्ञेतिवायव्येन कषायकुंभेन पयः पृथिव्यामितिवारुणेनन पंचगव्यकुंभेन
याःफलिनीरितिनैरृत्येन फलकुंभेन हंसः शुचिषदिति सौम्यस्थमूलकुंभेन विष्णोरराटेतिपूर्वकुंभेन सोमराजान
मितिवन्हिस्थकुंभेन विश्वतश्चक्षुरितियाम्यकुंभेन नमोस्तु सर्पेभ्य इति मध्यकुंभेन इदमापः प्रवहतेत्यष्टाभिः पूर्वा
दिक्क्रमेण प्रासादं सन्निधिस्वरं स्नपयेत् एकाशीतिकुंभासंभवे तु गंधोदकपूरितेनैकेन कलशेन दैव्याय कर्मणे शुंधध्व
मिति संप्रोक्ष्य मूत्रेणावेष्ट्य स्नापयित्वा देवरूपं प्रासादं चिंतयित्वा पताकादिना शोभयित्वा गंधादिना पूजयित्वा तस्या
पप स्नादेवं संचिंत्य मंत्रेण प्रासादमधिवासयेत् तद्यथा ओंह्रींसर्वदेवमयाचिंत्यसर्वरत्नोज्वलाकृते यावच्चंद्रश्चसूर्य
श्चतावदत्रस्थिरोभवेत्यधिवास्य पिंडिकावाहनपरिवारदेवतानां तत्तन्मंत्रैः प्रत्येकमष्टाविंशतिसंख्याकं होमं तिलैः कृ
त्वा मूलमंत्रेण चर्वशेषेन शतं हुत्वा चतस्रो गाः विष्णुगायत्र्या दुग्ध्वा क्षीरेण विष्णुगायत्र्या चरुं श्रपयित्वा देवाय निवेद्य भ
द्वादशब्राह्मणान् भोजयित्वा विष्णुः प्रीयतामिति निवेदयेत् ततः आचार्याय धेनुं दद्यात् रात्रौ जागरणं कुर्यात् इति
प्रासादाधिवासनम् अत्र ज्येष्ठकनिष्ठानां प्रतिमानां सप्तरात्रं पंचरात्रं त्रिरात्रमेकं रात्रं सद्यो वा वल्पं तमधिवासयेत् इतिय
इतिकारः अत्र श्लोकाः अनेकदिननिर्वर्त्ये ह्यधिवासनकर्मणि होमानष्टौ सहस्राणि विदधीत पृथक्स्पृथक् तस्मिन्ने

प्रति काह्ननिर्वर्त्यैकुर्यादष्टोत्तरंशतम् यावत्पूर्णाहुतिंदत्वासकृज्जपंनिद्रारपाःपद्मावतिदिनंहोममष्टोत्तरशतंशतं देशिकोमूर्ति
२४ पैः कुर्याद्यावत्कार्यंसमाप्यते संध्यास्कृतिमृषुवलिंमंत्रैर्दद्याद्यथोदितैः आचार्यदक्षिणादेयाकालिम्भ्यश्चस्वशक्तितः भोज
नचतथान्येभ्योदद्यैविन्नानुसारतः विनाधिवासनयत्नःकृतोपिनफलप्रदइति ततोगुरुर्वहिर्निर्गत्यप्रासादाभिमुखोभूत्वादे
हरूपंध्यायेत् पादौपादशिलास्तस्यजंघापादोर्ध्वमुच्यते गर्भश्चैवोदरंतत्रयंकटिश्चकटिमेखला स्तंभाश्चवाहवोतत्रपार्श्वटाजि
व्हाप्रकीर्तिता दीपः प्राणोस्यविज्ञेयो ह्यपानोजलनिर्गमः वह्नस्थानंपदंतत्रचतन्नाभिःपरिकीर्तितः हृत्पद्मंपिंडिकातत्रपात्र
तिमापुरुषःस्मृतः पादचारस्त्वहंकारोज्योतिस्तच्चक्षुरेवच तदूर्ध्वंप्रकृतिस्तस्यप्रतिमात्मास्मृतोबुधैः नलकुंभादधोद्दा
रंतस्यप्रजननंस्मृतं शुकनासाभवेन्नासागवाक्षःकर्णउच्यते कपोतपालिः स्कंधोस्यग्रीवाचामलसारकः कलश
स्तुशिरोज्ञेयंमज्जाक्षिप्तरसंहितन् नेदश्चैवस्कंधांविद्यात्मलोपोमांसउच्यते अस्थीनिचशिलास्तस्यस्नायुःकीला
द्यःस्मृताः चक्षुषीशिखरास्तस्यध्वजाःकेशाप्रकीर्तिताः एवंपुरुषतंध्यात्वाचमनसास्कंधोः प्रासादंपूजयेत्पश्चाद्गं
धपुष्पादिभिः शुभैः सूत्रेणवेष्टयित्वैवंवासस्तत्परिकल्पयेत् प्रासादमेवमभ्यर्च्यवाहनंचाग्रमंडपइति ततःकुंडे
वह्निंस्थाप्यनेइतिमंत्रेणाष्टोत्तरशतंहुत्वादेवमंत्रेणचहुत्वा पूर्णाहुत्यंतंसर्वंकृत्वा दिग्वलिंदत्वाआत्मानंनिवेद्यप्र
णमेत् फलतुस्वयंभूदेवःप्रागदवाप्रतिष्ठितः प्रासादश्चेन्नूतनस्तत्रापितदुत्तरेमंडपकृत्वा पूर्वेद्युःपुण्याहवाच

नांदीश्राद्धं देवप्रतिष्ठोक्तं मंडपस्थापनं कृत्विग्वरणादिकं कुर्यात् तत्र गुरुर्वेद्यां तद्देवतामंत्रेण कृत्वा वास्तुदेवतापूजना
प्रतिष्ठागृह पूजाज्यभागोत्तरग्रहहोमं शिख्यादिवास्तुपीठदेवताः वास्तुदेवहोमं कार्येति कलशस्थापनानि कृत्वा तैः
प्रासादं क्षालयित्वा यजमानमभिषिच्य प्रासादमुत्सृजेद्देवतानेव विधिः अथ मंडपादुत्तरतः पूर्वकल्पितैः शांतिक
लशादिजलैः सपरिकरं यजमानमभिषिंचेत्पुनः ततः आचार्यमूर्तिपब्राह्मणस्थपत्यादीन् परितोष्य प्रासादोत्सर्गं कुर्या
त् तत्र मासपक्षाद्युल्लिख्य इमं शिलेष्टकादार्वादिनिर्मितं दलभोजनगतीप्राकारपरिवारगोपुरपरिवारदेवतालयं सपुन
ततदेवतालोककामः कुलदृष्यानुग्रहाय अमुकदेवताप्रीतये ऽहमुत्सृजामीति कुशापवजलानि क्षिप्त्वा देवं नत्वा ब्राह्मणा
नभाजयेदिति ततः प्रातः आचार्यो मूर्तिमूर्तिपतिलोकपालमंत्रैः स्थापितदेवतमष्टशतमष्टाविंशतिं वा पूर्णाहुत्यंतं स्व
कुंडे हुत्वाधिवासितां कूर्मशिलां ब्रह्मशिलां पिंडीं कांचनानारमिति गृहीत्वा विघ्नाभावार्थं पुष्पोदकधारया अस्त्रमंत्रेण
शांतातीतेनाप्रासादमभ्युक्ष्य महाइंद्रियेति दर्भेणोल्लिख्यास्त्रपूतेन जलेन पुनः प्रोक्ष्य प्रासादस्य द्वारस्य मध्याद्ध्वे
नपवार्धेन वेशान्वीमुत्तरां वाश्रित्य स्नानादिसंस्कृतां कूर्मशिलां प्रणवेन पंचरत्नोपरि निधाय तच्छृंगे सौवर्णं कूर्मं द्वा
रसंमुखं निधाय तदुपरि रत्नानि निधाय षट्त्रिंशदंगुलायतां पंचचत्वारिंशदंगुलायतां वा ब्रह्मशिलामधिवासितां निदध्या
ओं नमो ख्यापिनि स्थिरे अचले ध्रुवे ओं ह्रीं लं स्वाहेति मंत्रेण यथाशक्ति संपूज्य प्रार्थयेत त्वमेव परमा शक्तिः त्वमेवासनधा

प्रति का शिवान्तपात्वपादे विस्यातव्यमिहं सर्वदेति ततोवर्णाध्वनेनमः पदाध्वनेनमः मंत्राध्वनेनमः भुवनाध्वनेनमः तत्वा॰
३५ ध्वनेनमः सकलाध्वनेनमः इतिसकलमध्वानंतदारूढं ध्यायेत् ततः पुण्याहवाचनंकृत्वा मूलमंत्रेणाष्टोत्तरशतं
हुत्वा पद्मिर्नक्षेपंचचत्वारिंशात्तुवा ब्रह्मशिलागर्ते षुप्रादक्षिण्येनसहेम्ना हस्तेनरत्नन्यासंकुर्यात् श्वभ्ररहिते
ब्रह्मशिलोपरिभागे सश्वभ्रांपिडिकांपूर्वपश्चिमाननेप्रासादे सौम्यप्रणालीदक्षिणोत्तराननेपूर्वप्रणालींध्रुवसूक्तेननि
धायदेवपत्नीलिंगकेनमंत्रेणपिंडिकामभिमन्त्र्य तत्रविष्णोःस्थापनायांश्रीश्चते॰ रुद्रस्यगौरीर्मिमाय॰ सूर्यस्योष
स्त्वित्रमित्यादिना ततआत्मतत्वायनमः आत्मतत्वाधिपतयेक्रियाशक्त्यैनमः विद्यातत्वाय॰ विद्यातत्वाधिपतयेज्ञान
शक्त्यैनमः शिवातत्वायनमः शिवातत्वाधिपतयेइच्छाशक्त्यैनमः इतितत्वन्यासः प्रतितत्वमूर्त्तिमूर्त्तिपतिलोकपालान्
विन्यसेत् ततः आधारशक्त्यैनमः इतिन्यस्यानंतासनादिवन्हितत्वांतंपीठपूजांनिर्वर्त्य आसनशक्तिभ्योनमइत्युक्त्वा॰
भ्यर्च्य सर्वदेवमयीशानिर्मैत्राल्यालाह्लादकारिणि त्वाप्रतिष्ठापयाम्यत्रमंदिरेविश्वनिर्मिते यावच्चंद्रश्चसूर्यश्चयावदेषा॰
वसुंधरा तावत्वंदेवदेवशिमदिरेऽस्मिन्स्थिराभवेतितांप्रार्थ्य प्रणवंश्वभ्रे वाह्येषोडशस्वरान् तेषांपरितोव्यंजनानि
न्यस्य श्वभ्रान्तःरत्नादीन्विन्यसेत् यथावाह्यपरिधोपवव्रीहिनिष्पावप्रियंगुतिलमापनीवारशालिसिद्धार्थकान् वज्र
मौक्तिकवैडूर्यशंखस्फटिकपुष्परागचंद्रकान्तेन्द्रनीलपद्मरागान् मनःशिलाहरितालांजनतुत्थमांजनकासीससौराष्ट्री॰

व नागेरिकपारदान् सौवर्णरौप्येतांम्रआयसत्रपुसीसकांस्यारकूटतीक्ष्णलोहानि श्वेतरक्तचंदनागरु अर्जुनोशीरवैष्णवीसह
देवीलक्ष्मणाचेति तत्रबीजानामभावेयवान रत्नानामभावेवज्रं धातूनामभावे हरितालंताम्राद्यभावेसुवर्णं औषधी
नामभावेसहदेवीन्यसेदिति एवंन्यस्तानांरत्नानांदिक्पालमंत्रैरालंभनंकृत्वा पृथ्वीमेरुकूर्मवाहनानिसौवर्णानि सौवर्णी
निद्वारोन्मुखानि पारदंचतस्मिन्मध्यश्वभ्रेनिधाय गुग्गुलरसेनरत्नादिकंस्थिरीकृत्य मधुपायसेनश्वभ्रमनुलिप्य पल्ले
गाच्छाद्यकवचेनावगुंठ्यास्त्रमंत्रेणसंरक्ष्य। गृहावैप्रतिष्ठेति प्रासादमभिषिंच्य इंद्रादिभ्योबलिंदत्वाक्रमेण एवमधि
डिकांप्रतिष्ठाप्यप्रासादाद्बहिरष्टदिक्षु स्थंडिलानिसंपाद्यसंस्कृत्यतत्तत्स्थंडिलानामीशानभागेषुकलशान्मंत्रवन्न्यस्या
ऽग्निंप्रणीय प्रतिस्थंडिलंपलाशसमिधामष्टोत्तरसहस्रमष्टशतंवामूलमंत्रेणहुत्वाज्येनच नारायणायविद्महेवासु
देवायधीमहि तन्नोविष्णुःप्रचोदयादितिमंत्रेणाष्टोत्तरशतमष्टाविंशत्यष्टौवाहुत्वाचार्योऽष्टदिक्संस्थेभ्यःकुंभेभ्यः
पात्रेतोयमादाय मूलमंत्रेणशतकृत्वोभिमंत्र्यप्रतिमासन्निधौगत्वा सर्वतीर्थमयमिदंजलमिति ध्यात्वा देवमूर्ध्न्यभिषिंचेत्॥
नरसिंहेनहुंफडंतेन देवस्यदिग्बंधनंकृत्वामूर्तिपैःसहदेवं प्रार्थयेत् प्रबुध्यस्वमहाभागदेवदेवजगत्पते मेघश्यामगदापा
णेप्रबुद्धकमलेक्षण प्रबुद्धभूधरानंतवासुदेवनमोस्तुतेइति जलक्षीरकुशाग्रतिलतंडुलयवसिद्धार्थकपुष्पाणिशंखेकृत्वा
शंखमुद्रयादेवायार्घ्यंदत्वा उत्तिष्ठब्रह्मणस्पत इत्युत्थाप्यरथमुपवेश्य देवस्यपुरतोगुरुः पृष्ठतोयजमानः पार्श्वतोमूर्तिपा एवं

प्रति परिक्रम्य रथाद्वतार्य प्रासादद्वारसंमुखं लिंगं कृत्वा ऽर्घ्यं दत्वा प्रासादं प्रवेशयेदिति ततः सयजमानो दैशिको देवं पिंडिकायां
१६ स्थापयेत् तद्यथा स्नलग्ने ईश्वरं भावयन् श्वभ्रन्यासद्रव्यसहितं सौवर्णपद्मं श्वभ्रे निधाय प्रधानपुरुषौ यावच्चंद्रदिवाकरौ
तावत्त्वमनपायशक्त्या युक्तो त्रैव स्थिरो भवेत्युक्त्वा ध्रुवा द्यौर्ध्रुवा पृथिवीति मंत्रं पठित्वा यथा वंयवाद्यैर्वेन राश्रितमीशानाश्र
श्रितं वा देवं पिंडिकाश्वभ्रे निधाय स्थिरो भव शाश्वतो भवेत्युक्त्वा पिंडिकालिंगांतरालं वालुकासीसकादिभिर्दृढं पूरयि
त्वा पुनर्न्नैवालयेत् ततो विश्वतश्चक्षुरित्युक्त्वा देवमूर्ध्नि हस्तं निधाय परं देवं ध्यात्वा रुद्रसूक्तैर्वत सामनी जप्त्वा प्रातिष्ठिका
न्मंत्रांन्जपेदेव तत्र विष्णोः अतसीपुष्पसंकाशं शंखचक्रगदाधरं संस्थापयामि देवेशं देवो भूत्वा जनार्दन रुद्रस्य त्र्यक्ष
दशबाहुं च चंद्रार्द्धकृतशेखरम् गणेशं वृषभस्थं च स्थापयामि त्रिलोचनम् अथ ब्रह्मणः ऋषिभिः संस्तुतं देवं चतु
र्वक्त्रं जटाधरम् पितामहं महाबाहुं स्थापयाम्यंबुजोद्भवम् सूर्यस्य सहस्रकिरणं शांतं सर्वरोगपासेवितम् पद्महस्त
स्तं महाबाहुं स्थापयामि दिवाकरम् ततो देवस्य तद्रूपं स्पर्शनं जपेत् तद्यथा विष्णोः पुरुषसूक्तं रुद्रस्य रुद्रं ब्रह्मणो वाह्नी रे
वः सौरम् अन्येषां ततत्प्रकाशकान् मंत्रान्जपित्वा प्रणवव्याहृतिशिरःसहितां गायत्रीं प्राणसूक्तं च जपित्वा सान्निध्यं कु
र्यात् नमस्ते त्यक्तसंगाय संगाय संतोषपरमात्मने ज्ञानविज्ञानरूपाय ब्रह्मतेजोनुशालिने गुणातिक्रांतवेगाय पुरुषाय प्र
महात्मने अव्यक्ताय पुराणाय विष्णो सन्निहितो भव भगवान्देवदेवेश त्वं पिता सर्वदेहिनां त्वया व्याप्तमिदं सर्वं जगत्स्थ

वरजंगमम् त्वमिंद्रःपावकश्चैवयमोनिर्ऋतिरेवच वरुणोमारुतः सोमेईशानप्रभुरव्ययः येनरूपेणभगवान्व्याप्तंच भुवन
त्रयम् तेनरूपेणादेवेशआर्चायाःसन्निधौभव सर्वमंत्रादिदेवेशलोकानुग्रहकाम्यया अत्रार्चायांमहादेवभवसन्निहितः
तदाः सूर्यचंद्रमसौयावद्यावत्तिष्ठतिमेदिनी तावत्त्वयात्रदेवेशस्थातव्यंस्वेच्छयाप्रभोइति अथस्थापितस्यपरिवारदेवताः
नंदिमहाकालवृषभभृंगिरिटिस्कंदोमाविनायकविष्णुब्रह्मजयंतेंद्राग्नीयमनिर्ऋतिवरुणवायुसोमेशानाख्यरोगणागंध
धर्वगुह्यकविद्याधरादीन् रुद्रस्य ब्रह्मणोविष्ण्वादयःपरिवारदेवताः विष्णोर्ब्रह्मादयः एवंचंडविनायकादीनामपिपू
रिकल्पनं ततः कुंडेष्वगहोमः ततः पूर्वकुंडेहृदयमंत्रेणाज्याहुतिविंशतिकंदक्षिणकुंडेशिरोमंत्रेण पश्चिमेशिखामं
त्रेण उत्तरेकवचमंत्रेण आचार्यकुंडेनेत्रमंत्रेण पुनःपूर्वकुंडेअस्त्रमंत्रेण ततःआयुधमंत्रेर्हुत्वाप्रार्थयेत् तद्यथा लो
कानुग्रहहेत्वर्थे स्थिरीभवस्मरशासने सान्निध्यंहिमहादेवयत्नसहपरिवर्जय माभूत्पूजाविरामोस्मिन्यजमानःसमृद्ध्य
ताम् संपादयमत्ताराष्ट्रंसर्वोपद्रववर्जितम् क्षेमेणवृद्धिमतुलांसुखमक्षयमश्नुताम् इतिसंप्रार्थ्यविधिनादेवंसांगंसमर्च
येदिति ततोवहिर्द्वारादौतत्तन्मंत्रैः स्थापयेत् विष्णुश्चैवचंडप्रचंडजयविजयान् शिवश्चेन्नंदिमहाकालभृंगिगणेशान् स्रू
र्यश्चदंडपिंगलौमहाराहुणान् अथशिवस्यवाहनादिपूजयेत् यस्यसिंहारथेयुक्ताव्याघ्रीभूतास्तथोरगाः ऋषयोलोक
पालाश्चसोमोविष्णुःपितामहः नागायक्षाःसगंधर्वायेचदिव्यानभश्चराः तमहंत्र्यक्षमीशानंशिवंरुद्रमुमापतिम् आवा

प्रति॰म॰ ह्वयामिसगणंसपत्नीकंवृषध्वजम् ओंआगच्छभगवन्रुद्रानुग्रहायशिवोभव शाश्वतोभव पूजांमेगृहाणत्वंनमोस्तुते
९७ ओंस्वागतमनुस्वागतमस्तुस्वागतं भगवतेनमोनमः सोमायसगणायसपरिवारायप्रतिगृण्हातु ओंभगवन्मंत्रपूतमिद
मर्घ्यपाद्यमाचमनीयमाचमनीयमासनंब्रह्मणाभिहितंनमोनमः स्वाहेति आगच्छभगवन्नित्यादिकामंत्राऊहेनसोम
यपदवर्जिताःसर्वसाधारणा एवंसंपूज्यदधिदुग्धघृतमधुशर्करारव्यैःसमंत्रैर्मध्येस्वगंधजलयुतैःस्नापयेत् ततोविराट्
सहस्रशीर्षा॰ अभित्वाभूरनो॰ पुरुषएवेदं॰ नत्वावाइतिचतुःकृत्वाजपेत् प्रतिसपर्याचजलेनदेवस्नापादीनाभिवक्षःशि
रश्चस्पृशेत् ततोलिंगमंत्रैः प्रार्थयित्वा भगवन्देवदेवेशधर्मकामार्थमोक्षद विद्याविद्येश्वरैरुद्रैर्गणेशैर्लोकपालकैःदेवदा
नवगंधर्वैर्यक्षैश्चसहकिन्नरैः अस्मिन्लिंगेमहादेवसर्वदावसवैप्रभो पुसांमनुग्रहार्थयथायपृथिव्यांस्वेच्छयाप्रभो प्रव
रेणाभावेनस्थातव्यंसर्वदात्वया सर्वविघ्नहरः पुंसांसर्वदुःखहरःसदा सर्वदायजमानस्यइच्छार्थसफलोभव नमस्तेसर्वध
र्मायसंतोषविजितात्मने ज्ञानविज्ञानतृप्तायब्रह्मतेजोभिशालिने नमस्तेभुद्रदेहायपुरुषायमहात्मने स्थापकानांमूर्ति
पानांशिल्पिनांचविभोसदा ग्रामदेशेनृपाणांचशांतिर्भवतुसर्वदा पूजकाराधकानांचभक्तानांभक्तवत्सल सर्वेषांचजगन्ना
थरक्षासिद्धिप्रदोभव चंद्रार्कावनिपर्यंतंलिंगेऽस्मिन् परमेश्वर स्थातव्यमुमयासार्धंसर्वलोकानुकंपया यवच्चंद्रश्चभा
स्करश्चयावत्तिष्ठतिमेदिनी तावत्वयाऽत्रदेवेशस्थातव्यंस्वेच्छयाविभोइति ततःपुरुषसूक्तेनविष्णुषोडशोपचारैःसंपूज्य

पुराणमंत्रैरन्यैर्वा स्तुत्वा नमेत् पुनः प्रार्थयेच्च ज्ञानतोऽज्ञानतो वापि यावद्विधिरनुष्ठितः स सर्वस्त्वत्प्रसादेन सग्रामोभव वतान्नमेति शिवस्यापि ज्ञानतोऽज्ञानतो वापि भगवन्यत्कृतं मया तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादादधोक्षजेति अथकर्तेना मपुत्रं देवनामकुर्यात् सर्वदा व्यवहारार्थं तच्च विष्णोरमुकस्वामी अमुकनारायणइतिवा शिवस्य अमुकेश्वरः रवेरमु कादित्यः देव्या अमुकेश्वरी गणपतेरमुकविनायकइति अथनैमित्तिकेदोषे प्रायश्चित्तम् तत्रस्थाप्यमानदेवार्चालिंग वायांयां दिशामुपाश्रयेत्तत्तद्दिगीशमंत्रेणाष्टोत्तरशतसर्षपाशमीपलाशान्यतमसमिद्धोमं तिलहोमं कृत्वा पूर्णाहुत्यंतं कुर्यात् दिगीशमंत्रास्तु तंत्रान्तरसिद्धप्रसादतः प्रसिद्धाः अत्राचार्यदक्षिणाश्च क्रमेण गजो मेषो महिषोऽजः शक्तिर्मुक्ता फलं वस्त्रयुग्मं धेनुर्वृषभ इत्यादिकास्तदभावे स्वर्णप्रतिकृतयः राजतो वा वृषभ इति ततः स्थाप्यमाने देवे शब्दोत्थाने श्वभ्रान्ते स्फुटिते वा शान्त्यर्थं मूलमंत्रेणाष्टोत्तरशतं हुत्वा प्रतिष्ठाहोमं कुर्यात् शिवाय स्थिरो भव स्वाहा शिवायाप्रमेयो भव० शिवाय विबोधो भव० शिवाय नित्यो भव० शिवाय सर्वगो भव० शिवायाविनाशो भव० शिवायाकृत्तो भव स्वाहेति अथ सर्वशान्त्यर्थः अघोरमंत्रेणाष्टोत्तरशतं स्विष्टकृदंतं हुत्वा सर्वप्रायश्चित्तं च हुत्वा पूर्णाहुतिं हुत्वा ईशाने बलिं दत्त्वाचामेत् शोभमानोसने यजमानमुपवेश्य अथर्वणसान्नाम्नान्तरैश्चाभिषिचेत् अथाचार्यपूजनं तच्च यजमान आचार्यमासने उपविश्य सत्कृत्य ग्रामगोसहस्रमर्धं तदर्धं वा गोशतमर्धं वा वृषभैकादशकं पंचकं सालंकृतं यथाशक्ति सन्निधापदेश

प्रति कालौसंकीर्त्य देवप्रतिष्ठासिद्ध्यर्थमिमां दक्षिणां तुभ्यं महामाचार्याय सम्प्रददे नममेत्फलं कांतद्धस्ते गोपुच्छादि सतिलकुशयव
१५ तुलसीसहितं जलं क्षिपेत् विज्ञापयेच्च भगवन्सर्वधर्मज्ञ शिवशास्त्रपरायण सर्वशास्त्रार्थतत्त्वज्ञ शिवशास्त्रविशारद अ
नादिजन्मसन्तानेह्य प्रमेयेभवार्णवे अद्यमेत्सफलं जन्म अद्यमेसफलं धनम् अद्यमेजननीच्छित्तिरद्यमेपरमंपदम् मी
चितोऽहंत्वापानाघदुःखेभ्यान्द्ववबंधनात् ईशत्रातस्त्वापापस्माद्द्रप्रमेपान्दवार्णवात् मुक्तोऽहंमर्त्यसंसारात्प्रपन्नोऽहंत्त
वांतिकम् ज्ञानतोऽज्ञानतोवापिपन्न्यूनंयत्कृतंमया तत्सर्वपूर्णमेवास्तुत्वत्प्रसादात्क्षमस्वमेइति गुरुरपि समस्तजग
दुत्पत्तिस्थितिसंहारकारकः शिवः शिवः सानुचरः सर्वदासर्वकामदः द्रव्यहीनंतुयत्किंचिद्विधिहीनंतुयद्भवेत् तत्सर्वपूर्ण
मेवास्तु प्रसादात्कारणस्यतु स्थापकस्यमूर्तिपानांशिल्पिनांवर्णिनांतथा सराष्ट्रपार्थिवानांचशान्तीर्भवतुसर्वदा भृत्यपुत्र
कलत्रेश्चस्वसमिन्नवलवाहनैः कारणस्यप्रसादेनसर्वलोकेश्वरोभवेत्युक्त्वा यजमानायाशिषंदद्यात् ततः स्थापकमूर्तिपजन
पिनः ऋत्विक्स्थपतिदैवज्ञानसंपूज्यतेभ्यः शक्तितोदक्षिणांदद्यात् अधिवासनसद्योवहुकालसाध्यंवातत्रसद्यः पक्षेव
स्यमाणमधुकुंकुमादिसर्वद्रव्यैस्तद्दिनएवदेवंलेपयेत् अन्येतुप्रथमेऽहनिकुंकुमेनदेवंलेपयित्वापूजयेत् द्वितीयदिने
हरिद्रसिद्धार्थकचूर्णेन एवंतृतीयदिनेपिष्टसितचंदनयवचूर्णेन चतुर्थादिनेमनः शिलाप्रियंगुचूर्णेनः सर्वलेपनद्रव्ये
पुकपिलाघृतमिश्रणंलेपम् प्रतिमानांलेपनपंदिनत्रयेक्रमेणकृत्वा शेषलेपांश्चतुर्थदिनेयुगपत्कृत्वा त्रिसंध्यंवलिदा

दानंच निर्वर्त्य प्रतिकुंडे हवनं संपादयेत् शांतिहोमं च ऋत्विजः कुर्युरित्यनेक दिन निर्वर्त्यो ऽधिवासने ऽत्रेयम् शिवस्यतु प्रदाप्र
तिष्ठोत्तरकालसंपन्नस्कंदिनेषु मृगमदकुंकुमादिलेपाः क्रियंते तदा अष्टमदिने स्नपनार्चनादि महानुत्सवो विधेय इति सर्वदेवप्र
ष्ठापनविधिः अथ चतुर्थेऽह्नि कर्मे तच्चतुर्थदिने द्वितीयदिने वा कुर्यात् तत्र प्राग्वदेवाचार्यो मूर्तिप यजमान द्वारपालादिभिः स
ह मंडपं पश्चिमद्वारेण प्रविश्य तत्र महास्नानसंभारादिकमुपकल्प्य वेद्याः प्रादक्षिण्येन कुंडे स्थापितदेवस्यंच रुद्रंजपयित्वा
पंचब्रह्मभिरंगसहितैः सहस्राहुतिहोमं कुर्यात् ब्रह्ममंत्रा यथा ईशानः सर्वविद्यानां० तत्पुरुषाय विद्महे० अघोरेभ्योथ
घोरेभ्यो० वामदेवाय नमो ज्येष्ठाय नमो० सद्योजातं प्रपद्यामीति प्रागुक्ता अंगमंत्रा अपि अद्भ्यः संभूतः० वेदाहं० प्रजापत
तिः यो देवेभ्यः रुचं ब्राह्ममिति ततऋत्विजो घृतेन तिलैर्वा स्वस्वकुंडे शतं हुत्वा गौरीर्मिमायेति मंत्रेण जुहुयुरिति शिवस्य चतुर्थी
कर्म एवमन्यदेवविषयेपि पूर्ववत् स्थापितदेवस्य च रुद्रंजपयित्वा स्वमंत्रैः पत्नीमंत्रैश्च सहस्रहोमं कुर्यात् ऋत्विजापिग्र
तेन शतशतं प्रतिकुंडं हुत्वा पूर्णाहुतिं जुहुयुः गुरुश्च शालितोयेन मूर्तिं सिक्त्वा। निर्माल्यमपसार्य पुनः पूजयित्वा एका
शीतिघटान् पूर्ववत्संस्थाप्य स्नापयेदिति पद्मपुराणांतरोक्तप्रकारेण पूजयेत् तत्र दध्यक्षतकुशाग्रक्षीरदूर्वामधुयवसिद्धार्थक
पुष्पफलतोयान्वितमर्घ्यपात्रमासाद्य कलशाष्टसहस्रमष्टशतमष्टौ चतुःसे वा कलशान् सौवर्णान् राजतान् ताम्रान् रीतिक
मयान् मृन्मयान्वोपकल्प्य तेषु शंनो देवीरापोहिष्ठेति मंत्रैरुच्चरंतीयजलं प्रक्षिप्य पंचामृतमयक्षीरदधिमधुघृतशर्करौषधिषु

घृति पुष्पफलकुशरत्नगंधपंचगव्यादिकं प्रक्षिप्य ततः समुद्रं वः प्रहिणामीति मंत्रेण देवाय पाद्यं समर्प्य । स्नापयेत् तद्यथा पंचगव्य
२९ इति पंचगव्येन दधिक्राव्ण इति दध्ना आप्यायस्वेति क्षीरेण तेजोसीति घृतेन मधुवाता इति मधुना देवस्य त्वा सरस्वत्यै भैषज्येनेति
पुष्पोदकेन पवित्रराजपतिरिति रत्नोदकेन देवस्य त्वेति कुशोदकेन अग्न आयाहीति फलोदकेन समुद्रज्येष्ठा इति पूर्वकल्पितमश्री
तजलेन वसोः पवित्रमसीति सहस्रधाराकुंभेन ततः तूष्णीं स्नपनम् ततः अंधस्याधोवो इति पंचवर्णसूत्रेणानीराज्य बलिं हरे
त् मुंचन्तु माशपथ्यादिति कौतुकं विमुच्य सुगंधवस्त्रेण पवनघ इति देवं परिमार्ज्य मंदाकिन्यास्तु यद्वारि सर्वपापहरं शुभम्
तदिदं कल्पितं देव सम्यगाचम्यतां त्वयेति आचमनीयं निवेदयेत् देवसूक्तसमायुक्ते सर्वपत्रसमन्विते सर्ववर्णप्रदे देववास
सी प्रतिगृह्यताम् इति वस्त्रयुग्मं निवेदयेत् शरीरं ते न जानामि चेष्टां नैव च नैव च मया निवेदितं भक्त्या चंदनं प्रतिगृह्यतामि
ति कुंकुमकर्पूरयुक्तं चंदनं च विनम् मणिमुक्ताप्रवालाद्यैः स्वर्णपुष्पैर्मयाकृता पूजां तु देवदेवेश प्रसादाद्भव तत्सर्वेति पुष्पाणि नि
वेदयेत् वनस्पतिरसोत्सेति धूपं निवेदयेत् त्वं चंद्रस्त्वं रविर्विष्णुस्त्वं रत्नानि हुताशन त्वमेव सर्वज्योतिषि इति दीपोयं प्रतिगृह्यताम्
इति दीपमंत्रः अशीत्या चत्वारिंशत्ता वा दीपैरारार्तिकं अन्नं चतुर्विधमिति नैवेद्यं संभूषायेति भूषणानि दत्वा पूर्वकृतं होमं नि
वेद्य प्रार्थयेत् यन्मया भक्तियोगेन पत्रं पुष्पं फलं जलम् आवेदितं च नैवेद्यं तद्गृहाणानुकंपया मंत्रहीनं क्रियाहीनं भक्तिहीनं सु
रेश्वर यत्पूजितं मया देव परिपूर्णं तदस्तु मे इति ततः पुनरष्टोत्तरसहस्रं मूलमंत्रेण हुत्वा गांनारशाशेन पूर्णाहुतिं कृत्वा

स्वस्तिवाचनंकारयित्वा इंद्रादिभ्योवलिंदत्वाचण्यशेषंसमापयेदितिचतुर्थीकर्मविधिः अथशैवेचंडपूजा चतुर्थीकर्मदिनेदिना
तरेवा अमुकलिंगप्रतिष्ठागतयाचंडप्रतिष्ठांकरिष्ये इतिसंकल्प्य प्रासादाद्बहिः गर्भगृहार्धसूत्रांतराले ईशान्यांचडस्था
पयेत् पीठादौचंडमूर्तिंसंस्थाप्यपूजयेत् तत्रध्यानं रुद्राग्नेः प्रभवंचंडंकज्जलाभंभयानकम् शूलदंडधरंरौद्रं चतुर्वक्त्रंचतु
र्भुजं मुखोद्गीर्णमहाज्वालंरक्तहादशलोचनम् जटामुकुटखंडेंदुमंडितंफणिकंकणम् व्यालयज्ञोपवीतंचमाक्षसूत्र
कमंडलुं श्वेतपद्मासनासीनंभक्तिप्रव्हार्तिनाशनमित्येवंध्यात्वा ओंचंडासनायनमः ओंचंडमूर्तयेनमः ओंधुनिचंडे
श्वरायस्वाहेतिमंत्रेणावाह्य ओंचंडहृदयायहुंफट्नमः ओंचंडशिरसेहुंफट्नमः ओंचंडशिखायैहुंफट्नमः ओंचंड
कवचायहुंफट्नमः ओंचंडअस्त्रायहुंफट् करयोरस्त्र ओंचंसद्योजातायहुंफट् ओंचिंवामदेवायहुंफट् ओंचुं अघोराय
हुंफट् ओंचेंतत्पुरुषायहुंफट् ओंचोंईशानायहुंफट् इतिन्यासंकृत्वाषोडशोपचारैः पूजयेत् यावतिष्ठतिलोकेस्मिन्देवदे
वोमहेश्वरः तावत्कालंत्वयादेवस्थातव्यंशिवसन्निधौइति ततोदिग्बलिंकृत्वा भूतानिविज्ञापयेत् यथा यावत्कालंमहादे
वोलिंगमाश्रित्यतिष्ठति तावत्कालंतुरक्षार्थंयूयंतिष्ठतसर्वदेति ततोगुरुः कर्मशेषंसमाप्यभद्रासनेयजमानमुपवेश्या
भिषिंचेत् तत्रदेवस्यत्वेति० शेनोदेवीः० अथर्वणमाषंस्कराश्वितसादयोमंत्राः यजमानोमहाजलाशये अवभृथस्नानं
कृत्वा मंडपमागत्यगुर्वादीन्संपूज्य हिरण्यगर्भेतिदक्षिणांदत्वा सोपस्करायपस्विनीगांप्रदद्यात् गुरुश्च समस्तजगदुत्य

प्रति २०

त्तिस्थित्यनुग्रहकारकः शिवः सानुचरः स्याद्भः सर्वदा सर्वकामद इति मंत्रेणाशिषो दद्यात् यथाशक्त्या ब्राह्मणभोजनम् कर्त्तव्यं
डौ नास्तीति त्रिविक्रमः बाणलिंगे चले लोहे च सिद्धलोहे स्वयंभुवि प्रतिमासु च सर्वासु न चंडोऽधिकृतो भवेदिति इति चंडपूजा
अथ चलप्रतिष्ठा बोधायनोक्ता तत्र शुचौ देशे मंडपं तदंतः प्रतीच्यामुदीच्यामीशान्यां वा कुंडं तदुत्तरतः स्नानोपकरणा
नि नैर्ऋत्ये वास्तुमंडलं मध्ये वेद्यां सर्वतोभद्रमंडलं तदुत्तरे स्वस्तिकोपरि शय्यास्थानं च कृत्वा पूर्वदिने वा प्रतिष्ठादिने वा ग
णपतिपूजापुण्याहवाचनं कृत्वा मातृकापूजनाभ्युदयिकश्राद्धानि कृत्वा गुरुमष्टौ चतुरो वा ऋत्विजस्त्वा पूजयेत् ततो गु
रुः मंडपप्रतिष्ठामग्निस्थापनं कृत्वा स्थाप्यदेवस्यैव वारं चरुश्रपयित्वाज्यभागांते पलाशसमिद्भिः प्रत्येकमष्टसहस्रमष्ट
शतं वा प्रतिदैवतं लोकपालमंत्रैर्व्याहृतिभिर्वा जुहुयात् तावत्संख्याकमाज्यहोमं च कृत्वा स्थाप्यदेवताकमंत्रेण समित्तिला
ज्यानां प्रतिद्रव्यं दशाहुतीः स्विष्टकृतं च हुत्वा अष्टसहस्रमष्टशतं वा स्थाप्यदेवतामंत्रेण जपेत् अथ यजमानो गुरवे वरं द
द्यात् ततो गुरुर्देवं पंचगव्यैः पंचामृतैश्च पृथक् तत्तन्मंत्रैः शंन्नो देवीति संस्नापकलशेन संस्नाप्य श्रीखंडितार्द्यैरनुलिप्यो
ष्णोदकेन प्रक्षाल्य पुनः चतुर्भिः कलशैः समुद्रज्येष्ठा इत्यादि अभिषेकमंत्रैः चतुर्भिः क्रमेणाभिषिंच्य भद्रपीठे निवेश्याऽ
ष्टौ कलशान् तोयपूर्णान् पूर्वादिक्रमेण संस्थाप्य सप्तमृदः पल्लवान् कुशान् शांत्युदकं प्रस्रवणोदकं यवान् पुष्पाणि
फलानि च क्रमेणानि क्षिप्य स्थापनक्रमेण कुंभैः स्नापयेत् तत्र मंत्राः आपो हि ष्ठेति तिसृभिः हिरण्यवर्णाः शुचय इति चतुर्ष

पंपावमानः स्वर्जनइत्यनुवाकेन संस्नाप्याहतेवाससीपरिधाप्योपवीतं दत्वा गंधपुष्पधूपदीपैः संपूज्य हिरण्यगर्भेद्र
ति अष्टभिः पैष्टैरष्टभिर्दीपैर्नीराज्य हिरण्यशलाकां गृहीत्वा चित्रं देवानामीत्यर्धेन देवनेत्रे उन्मील्याज्यंतिलामध्वेरद्
ति अंजनेनांजयित्वा पुनर्मधुघृतशर्कराभिर्देवस्यत्वेतिजपेत् मंत्रान्ते अनज्मीतिवाक्यशेषः ततोभक्ष्यभोज्यादर्शादिद
र्शयेत् तदाग्रकौपिन तिष्ठेत् ततो दर्भेष्वासीनो दर्भान् धारयमाणः पुरुषसूक्तेन स्तुत्वा वंशपात्रे पंचवर्णान्वितमन्नं
प्रक्षिप्य देवं नीराज्य भूताधिपतये दीप्तमूलधरायोमापतये सर्वविद्याधिपतये रुद्राय नमः शिवमगर्हितकर्मास्तु स्वाहे
वलिं दत्वाचामेत् ततोमंडलदेवतागंधादिना संपूज्य स्थाप्यदेवं तल्लिंगमंत्रैरावाह्य कर्णिकायां प्रतिष्ठाप्य गंधाद्यैः
संपूज्य कुंडे मंडलदेवतामंत्रैर्दशदशांतिलाहुतीर्हुत्वा शय्यायां देवमारोप्य पुरुषसूक्तोत्तरनारायणाभ्यां वाससैः सहोप
तिष्ठेत ततो देवे पुरुषात्मने नमः प्राणात्मने नम इति शरीरे व्यापकं न्यसेत् प्रकृतितत्वाय नमो हृदि रसतत्वाय नमो वस्तौ
गंधतत्वाय पादयोः श्रोत्रतत्वाय कर्णयो त्वक्तत्वाय सर्वशरीरे चक्षुस्तत्वाय चक्षुषोः जिह्वातत्वाय जिह्वायां घ्राणतत्वा
यघ्राणे वाक्तत्वाय वाचि पाणितत्वाय पाण्योः पादतत्वाय पादयोः पायुतत्वाय पायौ उपस्थतत्वायोपस्थे पृथ्वीतत्वाय
पादयोः अप्तत्वाय वस्तौ तेजस्तत्वाय हृदि वायुतत्वाय घ्राणे आकाशतत्वाय शिरसि रजस्तत्वाय तमस्तत्वाय सत्वतत्वा
य देहतत्वायेति देहे ततोऽपि पुरुषसूक्तन्यासं कृत्वा संपूज्याधिवासयेत् ततो मंडले शय्ययोर्मध्येन गंतव्यम् मंडलदेवतानामुप

हारनिवेदनं तत्रसर्वान्नंब्रह्मणेघृतान्नंसोदकंइंद्राय आज्यान्नमग्नये माषान्नयेमाय कृष्णव्रीह्यन्नंसघृतंनिर्ऋतये न
वनीतौदनवरुणाय यवोदनंवायवे प्रैयंगवंसोमाय गावेधुकमीशानाय पापसंवासर्वेभ्यः ततःशय्याप्रवेशनेवास्त्र
रुंस्थापयित्वानेनदिग्बलिंदत्वानिशानयेदित्यधिवासनं प्रातररुणोदयेदेवमुत्थाप्यमूलमंत्रेणोपस्थाय घृतेनच
रुंश्रपयित्वाऽभिघार्यमूलमंत्रेणाष्टोत्तरसहस्रमष्टशतंवाहुत्वा अग्नयेस्वाहासोमायस्वाहा धन्वंतरयेस्वाहा कु
ह्वैस्वाहा अनुमत्यैप्रजापतयेपरमेष्ठिनेब्रह्मणे अग्नयेसोमाय अग्नयेन्नादाय अग्नयेन्नपतये प्रजापतये विश्वे
भ्योदेवेभ्यः सर्वेभ्योभूतेभ्यः भूर्भुवःस्वः अग्नयेस्विष्टकृतेस्वाहेतिजुहुयुः ततोयजमानोगुरवेवरंदद्यात् ततःउदिते
सूर्येगुरुर्वेद्यामेवदेवमभिमुखंकृत्वा रत्नपुष्पमूलफलौषध्यादिदर्शयित्वाताम्रपात्रेशांतिजलमादायमूलमंत्रेणशत
वारमभिमंत्र्य देवशिरसिअभिषिंच्योत्तिष्ठब्रह्मणस्पतेइत्युत्थाप्य विश्वतश्चक्षुरित्युपस्थायदेवस्यपुरस्तात् ओंब्रह्मवि
ष्णुरुद्रेभ्योनमः दिक्पालेभ्योनमः वसुभ्योनमः रुद्रेभ्यो० आदित्येभ्योनमः अश्विभ्यां० मरुद्भ्यो० कुबेराय० गंगादि
महानदीभ्यो० अग्निषोमाभ्यां० द्यावापृथिवीभ्यां० इंद्राग्निभ्यां० धन्वंतरये० सर्वेशाय० विश्वेभ्योदेवेभ्यो० ब्रह्मणेनमइ
तिजपित्वा देवस्यपुरतोजपमानमभिषिंच्य देवमंत्रजम्वाक्षवसूक्तेनतल्लिंगमंत्रेणपुरुषसूक्तेनगायत्र्याव्याहृतिभि
र्देवंप्रतिष्ठाप्य प्रतिमायांनिजवाहनायुधपरिवारादिकंध्यात्वापुनःपूजयित्वामुद्रांप्रदर्श्यमूलमंत्रमष्टोत्तरशतंजप्त्वा

कृत्वाचलाचम्य स्विष्टकृदाद्युत्तरांगानिसमापयेत् ततोयजमानोदक्षिणादद्याद्विप्रांश्चभोजयेद्यथाशक्ति इतिचलार्चाप्रतिष्ठा
अथजीर्णोद्धारविधिः अग्निपुराणे जीर्णादीनांचलिंगानामुद्धारविधिमाचरेत् लक्ष्मोस्थितंचभग्नंचस्थूलंवज्रहतंतथा
संपुटंस्फटितंव्यंगंपलिंगमित्येवमादिकम् वदेदितिदुष्टलिंगानांत्याज्यलम् लक्ष्मीस्थितंवाणादिक्रमेणतद्विधिनास्थापितं
लक्षणरहितम् भग्नमनेकत्राकलीभूतंस्थूलेपिंडिकाननुरूपम् वज्रहतंविद्युद्धतं संपुटंन्यञ्चं स्फटितमेकदेशभग्नं व्यंगंपिंडि
काप्रणाल्वारहितं आदिपदेनचांडालस्पृशादीनांग्रहण पिंडोत्पथपोर्दुष्टत्वेतयोरेवत्यागोनलिंगस्य। चालितंचलितंनि
म्नमत्यर्थविषमस्थितं दिङ्मूढंपतितंलिंगमध्यस्थंपतितंतथा एवंविधंचसंस्थाप्यनिर्व्रणंचभवेद्यदि नादेयेनग्रवाहे
णावस्थापाक्रिपतेयदितत्तोयत्रापिसंस्थाप्यविधिदृष्टेनकर्मणेति निम्नंसामंतभूभागान्निम्नायांभुविव्यवास्थितंविषमस्थितं
पञ्चपूजादिकंर्तुंनशक्यतेतस्मिन्देशेव्यवस्थितं दिङ्मूढविशेषविध्यभावेपिउदगतिरिक्तदिक्प्रणालीकंपतितंगर्तादौ म
ध्यस्थमपूर्णपिंडिकाश्वभ्रेतंगतापासादमध्यभागेस्थितमित्यपिकेचित् एवंविधमित्यन्येलक्ष्मीस्थितभग्नस्फटितविष्कंभ
व्यतिरिक्तानांग्रहणम् तेनजघन्योनिर्व्रणशब्दोपिलक्ष्मीस्थिताद्यतिरिक्तानामेवोपलक्षकः पीठाच्चचालितंलिंगंनिर्दोषंतु
भवेद्यदि तेनैवस्थापयेत्तत्रजपेल्लक्षमघोरकम् त्यजेत्सर्वोचितंलिंगंस्वपचाद्येश्चसेवितम् लिंगान्तरंप्रतिष्ठाप्यविशुद्धि
मधिगच्छति इतिसिद्धान्तशेखरोक्तेः तत्रैवः लिंगादीनांचजीर्णानां प्रोच्यतेविधिरुच्छ्रितो सर्वारिष्टविनाशार्थंसर्वप्राणिनां

प्रति०
२२

हितार्थकः लिंगस्य पिंडिकायाश्च प्रतिमामुखलिंगयोः सर्वेषां परिवाराणां हर्म्यप्राकारयोस्तथा उद्धारश्चावृत्तिः प्रोक्ताः थो॰
स्यारे हेतुकृत्यंते आवृत्तिः पुनः संस्कारः स्फुरिते खंडिते भग्ने दग्धे वाशनिनाग्निना उन्मत्तैः शत्रुभिश्चोरैः करिणा स्रोतसाहते
लिंगे पीठादिकेप्यपि विशीर्णे कालपर्ययात् देहं जीर्णं यथा देही त्यक्त्वान्यदुपगच्छति लिंगादीन्यपि जीर्णानि तथा मुंच
ति दैवतं खंडितं चूर्णितं लिंगं प्रेतनाद्या आश्रियंति यत् लिंगाद्यसत्वशून्यत्वात् तथा च ब्रह्मराक्षसाः कर्तुर्नृपाणां राष्ट्रस्य तद्ग्रा
मस्य विशेषतः पीडां कुर्वंति ते त्वग्रां दुर्भिक्षमरणादिकम् तस्मात्सर्वप्रयत्नेन कुर्यादुद्धारणक्रियाम् स्वायंभुवे च लिं
गे तथैव च ऋषिभिश्चासुरैर्दैवैस्तत्त्वविद्भिः प्रतिष्ठिते लिंगे जीर्णादिदुष्टेपि नोद्धारं तत्र कारयेत् इदमपि स्वायंभुवादिव्यक्ति
विषयं न तु देवात्तद्व्यक्तिनाशेन तत्स्थानस्यापि नेदानीं तन्नतादृशव्यक्तिविषयम् स्वायंभुवादिलिंगानां जीर्णपीठं परित्यजेत् ॥
उक्तो जीर्णादिभिर्दुष्टैर्मानुषं तु परित्यजेत् दिङ्मूढं पतितं स्थानान्मध्यस्थं स्रोतसाहतम् चोराद्यैश्चालितं लिंगं स्थापयेन्निर्व्रणं पु
लोहाद्यच्छिन्नभिन्नांगं सघायस्थापयेत्पुनः सुवर्णाद्यष्टलोहनिर्मितं लिंगं दैवाद्ग्रसन्नदेवसन्नकृत्वा पुनः स्थापयेदित्यर्थः
बाहुपादशिरोहीनां कर्णनासास्यहीनकां तादृशीं परिवाराणां प्रतिमां परिवर्जयेत् यद्द्रव्यं यत्समानं च लिंगं वा प्रतिमापि
वा तादृक् तेनैव मानेन तद्द्रव्येण प्रकल्पयेत् कारयेन्नान्यमानेनान्यद्रव्येण तत्पुनः नान्याकारं च नान्यैस्तु स्थापयेत्तद्
हुत्तमः स्रोतसापहृते लिंगे प्रासादे वा तदन्यतः तत्समीपगते देशे स्थापयेद्बाधवर्जिते प्रासादे पतिते हर्म्ये गोपुरे मंडला

दिके तदाकारं च तद्द्रव्यं तन्मानं तत्र कारयेत् कर्मयोग्याः शिलाग्राह्या दृढकाश्च तथाविधाः हीनद्रव्यकृते कर्मण्येषे द्रव्यैः समा
चेत् हीने वाप्यधिके माने माकारं वा न कारयेत् एवमुक्तेन मार्गेण दोषैरुक्तैर्विचार्य च लिंगे पीठादिके जीर्णे तदनुसारं तथाचरेत्
तिथिनक्षत्रवारादिन दर्शनेन विचारयेत् जीर्णं चोद्धारयेद्विद्वान् जीर्णं नैव चालयेत् तस्मान्न धारयेज्जीर्णमजीर्णं रक्ष
येद्बुधः सुस्थितं दुःस्थितं वापि शिवलिंगं न चालयेत् शतेन स्थापनं कुर्यात्सहस्रेण तु चालयेत् अस्य श्लोकस्य वाक्या
र्थो वर्ण्यते यथायथागमं नित्यपूजादिभिर्युक्तं जीर्णाद्यमपि सुस्थितं हीनं पूजादिभिर्लिंगमजीर्णमपि दुःस्थितम् देवतास्था
पितं मोहाद्यदि निम्नत्वमागतम् तल्लिंगं दुःस्थितं वापि तत्रत्यैरिति निश्चितं सहस्रादिकहोमेन तस्य चालनमीरितं स्था
पनं शतहोमेन तस्य लिंगस्य चोदितं एवं बहुविधैस्तत्र दोषाश्च बहुधोदिताः परीक्ष्य बहुधा तांश्च जीर्णं लिंगं समुद्धरेत् हय
शीर्षागमेपि जीर्णोद्धारविधिं कृत्स्नं संक्षेपात्तं ब्रवीमि ते चालितोत्पाटिता भूमिः केन चित्स्थापकर्मणा चंडालपतितस्प
र्शदूषिते वान्हिना वा स्वयमापतिता जीर्णा नदीवेगादिपातिता अपुण्यजलसंस्पृष्टा विपक्षजनदूषिता पतिताघर्षि
ताश्लेष्मविषमूत्रादि विदूषिता सव्रणा लक्षयोपेता संस्कार्या देशिकेन तु भूमिर्लिंगमीश्वरप्रतिमा च चंडालपतितस्पृष्टा
अमेध्यस्पर्शो निषिद्धस्पर्शः जीर्णा कालबाहुल्येन क्षारादिसंबंधेन विशीर्णा सव्रणा एकदेशेन भग्ना देशिक उपासकः पूर्वो
क्तेन विधानेन वैदिकेन करोतु मः अचलां दूषितामेव स्थापयेद्बुधिनो ध्वजा पूर्वोक्तेन चलाचोप्रतिष्ठाप्रकारेण एवंविधनो

प्रति स्थापितापीत्यन्वयः वक्ष्यमाणप्रकारेणोद्धृतामित्यर्थः पूर्वपीठंपरित्यज्ययदन्यमर्पितन्तत्तं ततोयथोक्तविधिना न्यासादेसन्नि
२३ वेशयेत् दुष्टंपूर्वासनंपरित्यज्यान्यस्मिन्नासादगत आसनेयथोक्तेनाचला र्चास्थापनप्रकारेणपुनःस्थापयेदित्यर्थः अति
जीर्णान्तर्शिथिलांगांदारवीं शैलजामपि परित्यज्यन्यसेदन्यांपूर्वोक्तविधिनागुरुः संहारविधिनातत्रमंत्रान्संहृत्यदेशिकः स
महस्त्रारसिंहेनहृत्वातामुद्धरेद्गुरुः संहारविधिः प्रातिलोम्येनमंत्रान्कालात्संहृत्योद्धृत्यनारसिंहेननृसिंहमंत्रेण हे
मद्रव्यमाज्यमुन्याभादेशात् वृषंसंयोजयित्वानुमंत्रेणोद्धृत्यदेशिकः दारवींदाहयेद्वन्हौ शैलजांप्रक्षिपेज्जले धातुजांरत्न
जांचापिप्रक्षिपेन्मकरालये आगाधेचान्यतोयेवाक्षिपेन्नद्यामहाजले वृषंवृषौच रज्ज्वासंयोज्यमंत्रेणयामुपतेनोद्वा
हयेदितित्रिविक्रमः यानमारोप्यजीर्णांवाच्छाद्यवस्त्रादिनागुरुः शंखदुंदुभिनिर्घोषै तवादित्रनिःस्वनैः नीत्वागाधंजलं
रम्यंभागीरथ्यांमहार्णवे विष्वक्सेनायदीर्घेणप्रक्षिपेत्तांततोगुरुः यानमारोप्येत्यादिपूर्वोक्तरावप्रतिपादनइतिकर्तव्यतोक्त्य
र्थम् विष्वक्सेनोद्देशेनवीर्येणवीर्येनगुरुर्भागीरथ्यादिजलेतांप्रतिमांक्षिपेदित्यर्थः रत्नानिक्षिप्तान्यादायस्वयंदद्यात्तुदक्षि
णांधेनवोदशवापंचस्वर्णवस्त्राद्यलंकृताः जीर्णोद्धारेप्रदातव्यागुरवेविष्णुतुष्टये लिंगान्तर्निक्षिप्तानिरत्नान्यादाय स्वयं
जमानोदशधेनुः पंचवाहेमवस्त्राद्यलंकृता गुरवेदक्षिणांदद्यादित्यर्थः भोजनीयाविष्णुभक्तादेयमन्नमवारितम् त्रिरात्र॥
मुत्सवःकार्यः पंचसप्ततथापिवा बलिश्चविधिनादेयोयथोक्तेनसंस्कारेणतम यथोक्तेनचलार्चाप्रतिष्ठाप्रकारेण ततोनिवेद।

येदन्यां प्रतिमां लक्षणान्विताम् निवेदयेत् स्थापयेत् तत्क्षणादेव राजेंद्र तस्य दोषस्य शांतये संपतिवीपिपतिर्वानोपेक्षां तत्र कारये
त् अथास्य पिंडिकां पूर्वामन्यां तत्र निवेशयेत् यद्व्यापत्प्रमाणाच यामूर्तिश्चोद्धृता हरेः तद्तुल्या तत्प्रमाणाच सा मूर्तिस्तत्र
कीर्तिता यत्प्रमाणं यदाकारं यन्मयं पिंडिवमुद्धरेत् तत्प्रमाणं तदाकारं तन्मात्रं तत्र विन्यसेत् विहाय पीठिकां पूर्वां तद्दिने चापरां
न्यसेत् द्वितीये वा तृतीये वा दिवसे स्थापयेद्धरिम् अत ऊर्ध्वं भवेद्दोषो विधिनापि निवेशिते अनेनैव विधानेन ले
ख्यादीस्ता विवर्जयेत् कुड्यलिखिताः प्रतिष्ठापिताः प्रतिमालेख्याः अन्यद्विकल्पयेत् तत्र तत्प्रमाणं तदाकृति एष संक्षेपतः
प्रोक्तो जीर्णोद्धारविधिस्तव सर्वेषामेव देवानामेष साधारणः स्मृतः यो जीर्णं विधिना विंवं संस्कुर्यान्मानवो भुवि फलं दशगुण
गुणं तस्य मूलान्नास्त्यत्र संशयः वापीकूपतडागानां सुरधाम्नां सदानघ प्रतिमानां सभानां च संस्कर्ता यो नरो भुवि पुण्यं श
तगुणं तस्य भवेन्मूलान्न संशयः संशयोऽत्र न कर्तव्यो जीर्णसंस्कारकर्मणि मूलाद्दशगुणं प्रोक्तं पुण्यं कूपे प्रतिष्ठिते प्रतिमायां
शतगुणं कूपाद्धि परिकीर्तितं प्रतिमादेर्दशगुणं जीर्णसंस्कारणाद्भवेत् कूपप्रतिमयोर्दशगुणशतगुणयोरल्पत्वमहत्वा
पेक्षयाव्यवस्था अग्निपुराणे सुस्थितं दुःस्थितं चापि शिवलिंगं न चालयेत् शतेन स्थापितं कुर्यात्सहस्रेण तु चालनम् पूजा
दिभिश्च संयुक्तं जीर्णाद्यमपि सुस्थितम् पूजया रहितं यत्तु दृष्टमपि दुःस्थितम् अयं चालननिषेधो विध्यतिरेकेण श
तसहस्रसंख्ये न्यूनसंख्येयात्वाद्भवाते गोश्वाश्वाश्वित्यत्रेव वहुपकारित्वाद्यः सहस्रंशतानां च मित्यादौ वाहुल्येन दर्शनाच्चे

तिस्यापविरः विद्वांनतशेखरेनुहोमंगते भसंस्थेत्युक्तं पदपितत्रैव अस्मेरे मुनिभिर्देवैस्तत्त्वविद्भिः प्रतिष्ठितम् जीर्णंवाप्यथ॰
वाभग्नंविधिनापिनचालयेदिति तदसुरादिप्रतिष्ठापनतद्भक्तिविषयम् ननुदेवानद्यक्तिनाशेनतत्स्थानस्थापितेदानीते
दानींतत्क्रमाद्ग्रस्थक्तिविषयम् जीर्णोद्धारप्रकारोप्यत्रैव पाम्येमंडपमीशेवावास्यग्दैरेकतोरणम् विधायद्वारपू॰
जादिस्थंडिलेसर्वंपूजयेत् द्वारपूजादिशिवकुंभपूजांतमितित्रिविक्रमः मंत्रान्संतर्प्यसंपूज्यवास्तुदेवास्तुपूर्ववत् दिग्व
लिंचवर्हिकृत्वासमाचम्यसपगुरुः ब्राह्मणान्भोजयित्वानुशंभुंविज्ञापयेततः दुष्टलिंगमिदंशंभोशांतिरुद्धरणस्यचेत् हवि
स्तवास्तेविधिना अधितिष्ठचमाशिव एवंविज्ञाप्यदेवेशंशांतिहोमंसमाचरेत् मध्वाज्यक्षीरदूर्वाभिर्मूलेनाष्टाधिकं
शतम् ततोलिंगंचसंस्थाप्यपूजयेत्स्थंडिलेतथा। लिंगेलिंगाधिष्ठितदेवतांस्थंडिलेसंस्थाप्येत्यर्थः ओव्यापकेश्वरायेतिना
म्नाः ततशिवार्चनम् ओव्यापकेश्वरायहृदयायनमइत्याद्यूह्यम अंगमंत्राः ततस्तत्राश्रितंमंत्रंवारयेदस्त्रवधतः सत्वः कोपो
हृयः कश्चिल्लिंगमाश्रित्यतिष्ठति लिंगंत्यक्त्वाशिवाज्ञाभिर्यत्रेष्टंतत्रगच्छतु विद्याविद्येश्वरैः शंभुः शंभुरत्रभविष्यति सहस्रंप्रति॰
भागंचततः पाशुपतास्त्रातः हुत्वाशांत्यंवुनाप्रोक्ष्यपश्चात्कुशैर्जपेत्ततः ब्रह्मशिलापिंडिलिंगात्मकदेवताभागत्रयसंस्कारार्थंपाशु
पतास्त्रेण शांतिकलशोदकेनदेवंसंप्रोक्ष्य कुशैःस्पृष्ट्वाहोमसंख्यपापाक्षयतमंत्रंजपेत् दत्वार्घ्यंचविलोमेनतत्वंतत्वज्ञकांस्त
तः मूर्तिमूर्तीश्वरान्लिंगेपिंडिकासंस्थितानगुरुः विसृज्यस्वर्णपाशेनवृषस्कंधस्यपातथा रज्ज्वावध्वा नपानीत्वाशैवमंत्रं

ग्रणन शनैः तज्जले निक्षिपेन्मंत्रीतस्यार्थे जहुयाच्छतम रक्षांविधायतद्धान्निमहापाभषनास्त्रतः लिंगमन्यच्चतत्रस्थंस्था
पयेद्विधिवद्गुरुः विलोमेनपराङ्मुखसंतंकतल्लतल्लक्षकत ल्लतत्वाधिपमूर्तिमूर्तीश्वरावसाने सिद्धान्तशेखरे जीर्णोद्धारविधिंरक्षेसमा
सानत्रचोदितम् ईशान्यादक्षिणेच्चापिमंडेपपश्चिमासुरवम् कुर्वीतपूर्ववत्सर्वमेकास्यंचैवतोरणम् पूर्ववत्सर्वसंभारं
द्वारपालार्चनंकुर्यात्स्थंडिलेग्रेशिवार्चनम् द्वारपालार्चनंमंडपप्रतिष्ठाप्रकारेण मंत्राणांतर्पणंकुर्यात्द्वास्तदेवार्चनंत
था मंत्राणांदेवस्थापितकलानांअतर्वेद्विर्वोलिंदद्यात् शिवभक्तांश्चभोजयेत् शिवभक्तान्प्रवेतित्रिविक्रमः द्विजान्कर्म
करादींश्चततोविज्ञापयेच्छिवं दोषैर्लिंगमिदंदुष्टंशांतिरस्त्वस्यचोध्यतो तस्मादेवंविधानेनत्वधितिष्ठमहेश्वर भवत्विति
वचस्तेनप्रोक्तंतद्भावयेद्गुरुः तेनशिवेनप्रोक्तंशांतिर्भवेत्विति वचोगुरुभावयेत् विज्ञाप्यैवंसिवंभक्त्याशांतिहोमंसमाचरेत्
मधुनाज्येनदुग्धेनदूर्वाभिर्मूलमंत्रतः शतमष्टाधिकंमंत्रप्रत्येकंजुहुयात्ततः मूलमंत्रमुच्चार्येत्यर्थः त्रिभिश्चमधुरैः साधर्मै
मिधोघोरमंत्रतः शांत्यर्थंवर्तुलकुंडेसहस्रंतुहुयाद्गुरुः अथवास्त्रेणमंत्रेणजुहुयाद्यात्दशांस्ततः वध्नीयात्कंकणंहेमं लि
गस्योनाक्षकोंकरैः लिंगस्योतानंकंकरंभावयितात्र हैमंकंकणंवध्नीयादित्यर्थः लिंगसंस्नाप्यसंपूज्यपूर्वोक्तविधिनाततः
सांगंसंपूजयेद्गत्वास्थंडिलेव्यापकेश्वरं लिंगाश्रितानिभूतानिताडयेदस्त्रमंत्रतः यानिकानिचभूतानितिष्ठंत्याश्रित्यलिंगकं
त्यक्त्वाशिवाज्ञयातानिवृजंतुस्थानमिप्सितं, विद्याविद्येश्वरैर्युक्तः शिवोलिंगेभविष्यति इतिदत्त्वाशिवस्याज्ञांततोभागत्रयं

प्रति गुरुः हुत्वा हुत्वास्त्रमंत्रेणतया पाशुपतास्त्रेनतः प्रतिमार्गसहस्रं तु सिंचेच्छांतिघटोदकैः ब्रह्मशिलापिंडिलिंगात्मकं देवमा
२५ गत्रयं संस्कृतं तु त्रिसहस्रमस्त्रेण हुत्वा तेनैव प्रतिभगं कलशसहस्रेणाभिषिंचेदित्यर्थः मूलमध्याग्रकैर्दर्भैः स्पृष्ट्वा च जप
मात्रेण ब्रह्मशिलां मूलेन पिंडिमध्येन लिंगमग्रेण दर्भैः स्पृष्ट्वेत्यर्थः प्राग्वत्पाशुपतास्त्रं च जपेद्धोमस्य संख्यया सद्यो
जातादिकं पदघाद्यर्घ्यपराङ्मुखं दुष्टलिंगप्रतिप्रतिमाह सौधं भूमौ परित्याज्यं दारुजं चाग्निना दहेत् सौधस्त्रधा निर्मितं
लिंगं लौहजं तेन कार्यं स्याच्छैलजं चाप्सु निक्षिपेत् सुवर्णाद्यष्टलोहनिर्मितं भग्नं तेनैव सुवर्णादिना तत्कार्यमित्यर्थः त
त्त्वतत्त्वेश्वरान् लिंगानि मूर्तिमूर्तीश्वरानपि लिंगस्थान् विसृजेन्तद्वदंगमूर्तिस्थितानानपि ततः सुवर्णपात्रेण रज्ज्वा गोच
र्मजातया वृषस्कंधस्थापा बध्वा लिंगपीठं च चर्मणा शिवमस्त्विति तद्वाक्यं संजनो धारयन् गुरुः उद्धारार्थं च लिंगस्य तौट
षोत्तरयं ततः वहिनीत्वा ततो लिंगपीठं ब्रह्मशिलावृषं रथादिकं समारोप्य समुद्रे निक्षिपेत्ततः स्थूललिंगो धृतौ वद्धाग
जं वा पेरयद्गुरुः सौधं भूमौ परित्यज्य दारुजं चानले दहेत् सर्वं वा निक्षिपेत्तोये लिंगं वा प्रतिमादिकं ततः पाशुपतास्त्रेण शां
त्यर्थं जुहुयात् शतम् लोकपालादिभिस्तद्वदास्त्रैः शांत्यै शतं शतम् प्रतिदेवं तं शतं जुहुयादित्यर्थः रक्षां कुर्यात्ततद्धाग्निमं
हापाशुपतास्त्रतः तन्मानं तन्मयं लिंगं तत्र संस्थापयेत्पुनः प्रतिष्ठोक्तेनामार्गेण सर्वं कर्म समाचरेत् हर्म्यस्य परिवाराणां प्रा
काराद्देः समुत्पन्नो सर्वेषामपि जीर्णानाम् एव विधिः स्मृतः कर्नेत्रिदक्षिणाद्याद्धुवादिभ्यो यथोदितानाम् पत्पुण्यस्थापने प्रो

प्रति गः तादृशस्यान्यस्य प्रतिष्ठा स्थूलपूर्वपिंडिब्रह्मशिलयोरप्युद्धारः प्रतिष्ठतिविधिना पिंडिकांतरादिनिवेशश्च व्यंगेनु पूर्वपि
२६ कादीनां भग्नत्वे एवमेव पिंडिकाद्यभावेतु पिंडिकाद्यंतरस्थापनमात्र मित्यादि षुदुष्टलिंगानामित्यग्निपुराणवाक्यात् ॥
लिंगेपीठादिके चापीति सिद्धांतशेखरोक्तेः पूर्वीपि परित्यजेदिति हयशीर्षवाक्यात् स्वर्णादिनिर्मितभंगादौतु तेनैव सुवर्णा
दिनाततादृशेनावत्परिमाणं च लिंगादिकृत्वा तत्रैव पुनः स्थाप्यं यदि तेनैव सुवर्णादिना तादृशं कर्तुं न शक्यते तदा समुद्रे नि
क्षिपेत् रत्नजातु समुद्रए वक्षेप्तव्या रत्नजा यदि दग्धापि स्वकांतिं न जहाति तदा सैव स्थाप्येति त्रिक्रमः लोहाद्यं छिन्नागमिति
सिद्धांतशेखरवाक्यात् धातुजारत्नजां वा पीतिहयशीर्षवाक्यात् इति जीर्णोद्धारविधिः आयास्य प्रयोगः यजमान उद्धार्या
दक्षिणस्यामीशान्यां वा पश्चिमद्वारे कं तोरणमंडपं तं मध्यभागे वेदिं पूर्वभागे वर्तुलं चतुरस्रं वा पश्चिमे वास्तुपीठमुत्तरवा
लुकायाः स्थंडिलं च कृत्वा देशकालादि स्मृत्वा मौलफलाच्छतगुणफलकामोल्पप्रतिमायां तु दशगुणफलकामो वाजी
र्णादिदोषदुष्टलिंगस्य प्रतिमाया वा उद्धारमुच्छ्रयणं करिष्ये इति संकल्पयेत् पिंडिकाद्युपगृहद्वारप्रासादकलशेषु ईश्वर
प्रीतिकाम इति विशेष सर्वत्रेश्वरप्रीतिकामो वा ततो गणेशपूजास्वस्तिवाचनमातृकापूजननांदीश्राद्धान्युक्त्वा नूतनप्रति
ष्ठावत्कृत्वा तद्वद्देवब्रह्माचार्यसदस्यान् द्वात्रिंशत्षोडशाष्टौ चतुरो वा ऋत्विजो द्वारपालांश्चाष्टौ चतुरो वा वृत्वा वस्त्रालंका
रमधुपर्कादिभिस्तान्पूजयेत् अथाचार्यो मंडपपूजादि शिवकुंभपूजांतं कृत्वा वास्तुमंडपे महावेद्यां च देवतास्थापनं कृत्वा

प्रति
२७

वितेश्रीमद्भगवंतभास्करेप्रतिष्ठामयूखोष्टमः समाप्तः

अथास्यानुक्रमणिका लिख्यते ॥ ५ ॥

पीठदेवीं प्रणवेनाम पूजनं कृत्वा ओं व्यापकेश्व ~~...~~ हिं नमः ओं पकेश्वराय हृदयाय नमः ओं व्यापकेश्वराय शिरसे स्वाहा ७
ओं व्यापकेश्वराय शिखायै वषट् ओं व्यापकेश्वराय कवचाय हुं ओं व्यापकेश्वराय अस्त्राय फट् इति मंत्रैः शिवमर्चयेत् देव
तान्तरोद्धारमूलमंत्रेणार्चयेत् ततोऽग्निं संस्थाप्य लिंगचालनार्थे लिंगमंत्रेण तिलाहुतिसहस्रं हुत्वा मंडलदेवताहोमपू
र्णाहुतिं च कृत्वा जीर्णभग्नमिदं देव सर्वदोषावहं नृणां अस्योद्धारे कृते शांतिः शास्त्रेस्मिन्कथिता त्वया जीर्णोद्धारविधानं
च नृपराष्ट्रविवर्धनं तदनाधिष्ठितं देवं प्रोद्धरामि त्वयाज्ञया देवस्य जीर्णदोषं श्रावयित्वा शिल्पियुतः शिवं सांगं विसृज्य य
जमानस्य स्रुवणकंकणं वस्त्रं सौवर्णखनित्रेणैरन्यत्रयमारोप्य तरुच्छाये पर्यंतदेशे वृक्षमूले गाधनदीह्रदे वा मदेवेति
क्षिपेत् प्रतिमां तु प्रणवेन क्षिपेत् दारुजं चेत्तदुत्तरेद्दहेत् रत्नजं लिंगं यदि निजकांतिमजह देवभवति तदा तद्देव पूर्ववत् ॥
स्थापयेत् सुवर्णादिमयं तद्देवं सांगं कृत्वा स्थापयेत् प्रासादे त्वयं विशेषः प्रासादं मंत्रवत्खड्गेन च्छुरिकया वा संयोज्य नूतनं
प्रासादसिद्धिपर्यंतं खड्गादिकमर्चयित्वा प्रासादे सिद्धे खड्गादिमंत्रान्यथास्थानं प्रतिष्ठाकाले न्यस्य यजमानमभिषिच्यं ततो
लिंगं प्रतिमां वा तत्रैव विधिवत्स्थापयेत् ध्रुवा द्यौरित्यादिमंत्रान्पठित्वा स्थिरीकृत्य च हुं संपूज्यं प्रार्थयेत् ज्ञानतोऽज्ञानतो वापि यथो
क्तं न कृतं यदि तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादान्महेश्वर कर्तू राज्ञः प्रजानां च शांतिर्भवतु सर्वदा अस्माकं शिल्पिनां चैव सु
प्रीतो भव सर्वदेति ॥ इति श्रीसेंगरवंशावतंसश्रीमहाराजाधिराजभगवंतदेवादिष्टमीमांसकशंकरभट्टात्मजनीलकंठविर

यः पोथी शहरबनारस दिवाकर छापाखानेमे प्रतिष्ठामयूष शिवचरनके इहां छपा
साकीन मुहल्ले मदइनी कालीमहल्लके पास वा: कलम दुर्गा मिसीर वो छापने
वाले वदल जीसको लेना होय सो चांदनी चोकमे कुंजगलीके फाटकके पश्चिम
तरफ रामचरनके दुकानपर मिलेगी॥ सम्वत १९२३ मी॰ सावनवदी ११ वारमं
गर शुभमस्तुः

इतिप्रतिष्ठामयूखः समाप्तिमगमत् ॥ छ ॥